# विज्ञप्तिः ।

अवश्यमिदानीं संस्कृतविद्यायाः प्रचारो विरलीभवन्नेव दृग्गोचरीभवतीति न कस्यापि मनुजजातस्याविदितचरमेतत् । यद्यपि संस्कृतपाठशालाः क्वापिक्वापि संस्थापिताः सन्ति, स्थाप्यन्ते चाधुनापि, परं न केवलं प्रतिपत्तनं तासां वृद्धिरेव तदुन्नतिकरी, किन्तु तत्र पाठ्यमानविषयविचारोऽप्यत्यावश्यकः । सम्प्राते च तत्र प्रायो व्याकरणकाव्यादिमात्रमेवाध्याप्यते । यत एव च तत्रत्या अध्यापकास्तदन्तेवासिनश्च शास्त्रपारगंमन्यत्वमभिमन्यन्ते । परं विचारतस्तु तेऽसंसाधितसाध्या एव । यतः षडङ्गसहितस्य भगवतो वेदचतुष्टयस्य संश्रयणेन तत्तद्विध्यनुष्ठानसंक्षालितान्तःकरणका एव निखिलपुमर्थस्य लब्धारो भवन्ति । वैदिकसाहित्यस्य प्रचारो विरलतामेवावजगाहे यवनराज्यसंलब्धबलेन महामोहापरनाम्नाऽविद्योदयेन । तत्रेदानीमपि नानानगरेषु पाठशालासु तत्संस्थापकैस्तद्व्यवस्थापकैस्तत्रकृताध्ययनैरन्यैश्चापि तत्रत्यैर्मानुषप्रवरैर्दृष्टिरेव वैदिकाध्वनि न दीयते । वस्तुतस्तु व्याकरणस्येदमेव प्रयोजनमुक्तं महाभाष्ये—"रक्षार्थं वेदानामध्येयं व्याकरणम्, लोपागमवर्णविकारज्ञो हि सम्यग्वेदान्परिपालयिष्यतीति । ब्राह्मणेनावश्यं षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति च । तथा च षडङ्गवेदाध्ययनतद्विहितकर्मानुष्ठानमेव ब्राह्मणादीनां पुरुषार्थचतुष्टयसाधनमित्यपरोक्षमेवैतत्प्रेक्षावताम् । तदिमां परिपाटीं पुनरप्यूरीकुर्युश्चेद्वाडवोत्तमास्तर्ह्यवश्यं समभिलषितपदार्थप्राप्तिर्न दुर्लभेति सुनिश्चितमेव । यद्यप्यधीयते केऽपि ब्राह्मणास्तथा, तथापि "तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" इति योगसूत्रोक्तविधीनामनुष्ठानाभावे 'ज्ञानं भारः क्रियां विना' इति स्मरणादध्ययनं तेषां निष्फलमेव, क्रिया तु विप्रकुलात् प्रायो गतेव प्रतिभाति । 'अथ ब्राह्मणोक्ता विधयः' इत्येवमुपक्रम्य आपस्तम्बधर्मसूत्रेषु प्रोक्तम्—"तेषां महायज्ञा महासत्राणीति संस्तुतिः" १४ । "अहरहर्भूतबलिर्मनुष्येभ्यो यथाशक्ति दानम्" १६ । "देवेभ्यो स्वाहाकार आकाष्ठात्, पितृभ्यः स्वधाकार ओदपात्रात्स्वाध्यायः" इति १ । इत्येवं प्रथमे प्रश्ने चतुर्थे पटले प्रोक्तम् । अहो ! वैदिकसंप्रदायस्याविच्छिन्नतां वाञ्छद्भिर्महर्षिप्रवरैः काष्ठेनापि जलेनापि देवपितृकार्यं कुर्वीत—इतिपर्यंतमपि प्राजल्पि । परं तु शोकेन प्रोच्यते—ब्राह्मणकुलेष्वपि विवाहादिमहोत्सवेषु बहुखारीप्रमितघृतादिद्रव्याणां व्ययो भवति परं देवपित्रर्थं तु "इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः । तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥" इत्युक्तिमप्यगणयद्भिर्माषकप्रमितमपि नो दीयते, तर्हि कस्य पुण्यस्य प्रभावेण भारतीयाः प्रजाः कल्याणस्य पश्या भवेयुः । स्वधर्मतश्च्युतानामुपरि दैवेन याया विपदः पात्यन्ते ता अपि अल्पा एव । अतश्च विप्रादिवर्णैः स्वस्वधर्मानुसारेणान्तःकरणमलशोधकं लोकेषु विविधवित्तपुत्रादिलाभाधायकं देवपितृकार्यमवश्यमेवानुष्ठे

यम् । तत्र तदनुष्ठानप्रकारो बहुभिर्दाक्षिणात्यैर्निर्णयसिन्ध्वादिग्रन्थैः प्रोक्तः, परं त्वनुष्ठानकर्तॄणां गौडानां स्वस्वरूपविज्ञानस्याभावादेव परपद्धतियमार्गानुसारेण कार्यसंपादकत्वं किमु हास्यकरं नैव नूनमेव । अस्तु, येषा विविधविद्याचणानां गौडानां प्रभूततरविद्याप्रभावत्वं भगवंतः शङ्करावताराः श्रीशंकराचार्यस्वामिनो गौडपादाचार्य्यस्यान्तेवासित्वमङ्गीकुर्वाणाः प्राख्यापयन्–तेषामेव गौडनिबन्धांतकर्तॄणां गौडानां निर्णयसिन्धुप्रभृतिषु स्वन्वग्रन्थेषु खण्डनं कुर्वन्तो दाक्षिणात्याः पण्डितायन्ते स्म । तेषामेव ग्रन्थानुपजीव्य कुक्षिम्भरत्वमङ्गीकुर्वन्तः स्वीयप्राचीननिबन्धतात्पर्यानभिज्ञत्वमेव द्योतयन्तः स्वस्यात्पाशयत्वेन विद्याश्रमाभावमावेदयन्ति राजपूतानादिदेशेषु गौडाः । एवम्भूतप्रचारं सर्वत्र पश्यन्तः पूर्वजन्मपुण्यलब्धसुमतिकाः श्रीपार्वतीप्राणनाथपादाम्बुजसेवातत्परतया सनातनधर्मपथनिष्ठां स्वकीयशुद्धाचरणेन प्रचारयन्तो विविधपरिश्रमेण लोकोपकारं स्वकीयं च चिरकालस्थायियशःस्तम्भं स्थिरीकुर्वन्तो गौडग्रन्थानुसरणतद्विरुद्धग्रन्थतात्पर्यखण्डनपुरस्सरं सरलतया सर्वेऽपि कर्मकाण्डिनो भवन्त्विति गौडमहानिबन्धान् रचयन्तः स्वकीर्तिप्रकाशेनेर्ष्याद्वेषदोषदुष्टान्तःकरणदिवाभीतायमानमानवचक्षूंषि निमीलयन्तो ये गौडमहानिबन्धेषु विचित्राक्षरसौष्ठवकर्मकाण्डतात्पर्यबोधनपूर्वक–गौडीयश्राद्धप्रकाशाद्येकादशमहानिबन्धानाविरभावयंस्त एव सम्प्रत्यपि स्वकर्तव्यपालनाऽनवरतप्रसक्तमानसा गर्भाधानादिषोडशसंस्कारानुष्ठानसाधनगौडीयग्रन्थाऽभावमभावयन्तो महता परिश्रमेण **संस्कारप्रकाश**–नामकमिमं ग्रन्थं निरमासिषुः–गौडवंशावतंसाः पण्डित**श्रीचतुर्थीलाल**शर्माणः–कर्मठाः । तन्नूनमेतेषां ग्रन्था लोकमान्यतया प्रतन्वन्त्युपकारमित्यल्पेनैव लेखेन निवेदयति–रामदुर्गस्थगौडपण्डितबालचन्द्रशास्त्री विद्यावाचस्पतिः ।

विज्ञप्ति.

**सज्जनोंका–कृपापात्र–खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" यन्त्रालयाध्यक्ष–मुम्बई.**

॥ श्रीः ॥

# अथ संस्कारप्रकाशविषयाणामनुक्रमणिका ।


| विषयाः | प० | पृ० |
|---|---|---|
| प्रथमःकाण्डः १. | | |
| मङ्गलाचरणम् ... ... ... | १ | १ |
| संस्कारनामानि ... ... .... | " | " |
| संस्कारफलम् ... ... ... | " | " |
| स्त्रीशूद्राणाममन्त्रकाः संस्काराः ... ... | " | २ |
| मङ्गलस्नानम् ... ... ... | " | " |
| वस्त्रधारणम् .... .... ... | २ | १ |
| यज्ञोपवीतधारणम् ... ... ... | " | " |
| शांतिपाठः... .... ... ... | " | २ |
| गणपतिस्मरणम् ... .... .... | ३ | २ |
| संकल्पः .... ... ... .... | ४ | १ |
| कलशार्चनम् ... ... ... | " | २ |
| गणपतिपूजा ... ... ... | ५ | १ |
| षोडशोपचारमंत्राः ... ... .... | " | " |
| स्वस्तिवाचनम् ... ... .... | ८ | २ |
| कलशस्थापनमंत्राः ... ... ... | " | ० |
| पुण्याहवाचनप्रयोगः ... ... ... | १० | १ |
| अभिषेकः ... ... ... ... | १३ | १ |
| मोदादिविनायकपूजा... .... .... | १४ | १ |
| मातृकापूजनम् .... .... ... | " | " |
| घृतमातृकाः .... ... ... | " | २ |
| आयुष्यमंत्राः .... ... ... | १५ | १ |
| नांदीश्राद्धम् ... ... ... | " | २ |
| सांकल्पिकनांदीश्राद्धप्रयोगः ... ... | १६ | १ |
| द्वितीयः काण्डः २. | | |
| गर्भाधानप्रयोगः ... ... ... | १८ | २ |
| अभिगमनम् ... ... ... | " | " |
| गर्भधारणार्थमौषधम् ... .... ... | १९ | १ |
| पुंसवनप्रयोगः ... .... ... | " | २ |

सं. प्र.

१

वि. अनु.


| विषयाः | प० | पृ० |
|---|---|---|
| सीमंतोन्नयनप्रयोगः ... ... ... | २० | १ |
| शीघ्रप्रसवोपायः ... ... ... | २३ | २ |
| प्रसवयंत्रम्... .... ... ... | " | " |
| जातकर्मप्रयोगः ... .... ... | २४ | १ |
| कुमाररक्षा... .... ... ... | २६ | २ |
| दुष्टदृष्टिदोषरक्षाविधानम् ... ... | २६ | २ |
| बालरोदनपरिहारः .... ... ... | २७ | १ |
| बालरोदनपरिहारयंत्रम् ... ... | " | " |
| बालग्रहस्तवः ... ... ... | " | " |
| षष्ठीदेवीपूजनम् ... ... ... | २९ | २ |
| नामकरणप्रयोगः ... ... ... | ३० | २ |
| निष्क्रमणप्रयोगः ... .. ... | ३१ | १ |
| अन्नप्राशनप्र० ... ... ... | " | २ |
| दत्तपुत्रप्रतिग्रहविधानम् ... ... | ३४ | २ |
| चूडाकरणकर्मप्रयोगः ... ... ... | ३८ | २ |
| कर्णवेधः ... .... ... ... | ४२ | २ |

| विषयाः | प० | पृ० |
|---|---|---|
| वर्धापनविधानम् ... ... ... | ४३ | १ |
| महामृत्युंजयमंत्रः ... ... ... | ४८ | १ |
| वर्धापनसामग्री .... ... ... | ४९ | १ |
| अक्षरलेखनारंभविधानम् ... .... | " | २ |
| **तृतीयः काण्डः ३.** | | |
| लुप्तसंस्कारप्रायश्चित्तप्रयोगः ... ... | ५१ | १ |
| संस्कारलोपप्रायश्चित्तहोमः ... ... | ५३ | १ |
| उपनयनकालः ... ... ... | ५४ | २ |
| व्रात्यप्रायश्चित्तप्रयोगः ... ... | " | " |
| प्रायश्चित्तपूर्वदिनकृत्यम् ... ... | ५५ | १ |
| उपनयनप्रयोगः ... ... ... | " | " |
| यज्ञोपवीतधारणप्रकारः ... ... | ५७ | २ |
| ब्रह्मचारियमनियमाः ... ... .... | ६२ | २ |
| वेदारंभप्रयोगः ... ... ... | ६३ | १ |
| समावर्तनप्रयोगः ... ... ... | ६७ | १ |

| विषयाः | प० | पृ० |
|---|---|---|
| स्नातकनियमाः ... ... .. | ७२ | २ |
| यज्ञोपवीतसामग्री ... ... ... | ७३ | २ |
| समस्तब्राह्मणानां प्रवराः ... ... | ७५ | २१ |
| **चतुर्थःकाण्डः ४.** | | |
| कन्यावरयोर्विवाहकालः ... ... | ७६ | १ |
| कन्याया गुरुबलम् ... ... ... | " | २ |
| गुरुदोषापवादः ... ... ... | " | " |
| गुरुपूजाप्रयोगः ... ... ... | ७७ | १ |
| गुरुदानद्रव्याणि ... ... ... | ७८ | १ |
| रविशुद्धिप्रकारः .... .... ... | " | " |
| चतुर्थादिस्थरविशुद्धिप्रकारः ... ... | " | " |
| रविपूजाप्रयोगः ... ... ... | ७९ | १ |
| सूर्यदानम् ... ... ... ... | " | २ |
| चंद्रपूजाप्रयोगः ... .... .... | ८० | १ |
| चंद्रदानम् ... ... ... ... | " | २ |

| विषयाः | प० | पृ० |
|---|---|---|
| विवाहपूर्वकृत्यम् | ८१ | १ |
| विवाहपद्धतिः | ” | २ |
| गणेशादिस्मरणम् | ” | ” |
| प्रतिज्ञासंकल्पः | ८२ | १ |
| गणेशपूजनम् | ” | २ |
| षोडशोपचारमंत्राः | ८३ | १ |
| कलशस्थापनम् | ८५ | २ |
| पुण्याहवाचनम् | ८६ | २ |
| ब्रह्मादिकुलदेवतापूजा | ८८ | १ |
| नवग्रहपूजनम् | ” | २ |
| रक्षाविधानम् | ८९ | २ |
| तिलकमंत्रः | ९० | १ |
| विवाहविधानम् | ” | २ |
| मधुपर्कपूजा | ९२ | १ |
| अग्निस्थापनम् | ” | ” |

| विषयाः | प० | पृ० |
|---|---|---|
| कन्यादानम् | ९३ | २ |
| कुशकंडिका | ९६ | २ |
| राष्ट्रभृद्धोमः | ९८ | १ |
| जयाहोमः | ” | २ |
| अभ्यातानहोमः | ९९ | १ |
| लाजहोमः | १०१ | १ |
| सप्तपदाक्रमणम् | १०२ | २ |
| होमसमाप्तिः | १०३ | २ |
| त्र्यायुपकरणम् | १०४ | १ |
| चतुर्थीकर्म | ” | २ |
| विवाहसामग्री | १०६ | १ |
| पुनरुपनयनाधिकारी | १०७ | १ |
| अंगवंगादिदेशगमनप्रायश्चित्तम् | ” | ” |
| लशुनादिभक्षणप्रायश्चित्तम् | ” | ” |
| सुरादिपानप्रायश्चित्तम् | १०७ | २ |

| विषयाः | प० | पृ० |
|---|---|---|
| समुद्रयात्राकरणे प्रायश्चित्तम् | १०८ | १ |
| कलौ वर्ज्या धर्माः | ” | २ |
| पुनरुपनयनप्रकारः | ” | ” |
| पुनरुपनयने अजिनादिधारणनिषेधः | १०९ | १ |
| भस्मादिस्नानम् | ११० | १ |
| नद्यादिस्नानप्रयोगः | १११ | १ |
| तर्पणम् | ” | २ |
| प्रायश्चित्तप्रयोग. | ११२ | १ |
| प्रायश्चित्तहवनम् | ११३ | २ |
| पुनरुपनयनप्रयोगः | ११३ | २ |


पंचमः कांडः ५.


| | | |
|---|---|---|
| शूद्रविवाह.... | ११८ | १ |
| संकल्पः | ” | ” |
| शूद्राणां गणेशपूजनम्... | ” | २ |
| गणयागः | ११९ | १ |

| विषयाः | | प० | पृ० | विषयाः | | प० | पृ० | विषयाः | | प० | पृ० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| शूद्राणां स्वस्तिवाचनम् | .... ... | १२० | १ | शूद्रविवाहपद्धतिः | ... ... ... | ,, | ,, | चतुर्युगानि | ... ... ... | ,, | ,, |
| शूद्राणां नवग्रहपूजनम्... | ... ... | ,, | २ | शूद्रमधुपर्कपूजा | ... ... ... | ,, | २ | सप्तपदाक्रमणम् | ... .... ... | ,, | ,, |
| शूद्रकलशस्थापनम् | ... ... ... | १२१ | १ | कन्यादानम् | ... ... ... | १२४ | १ | कन्यावाक्यानि | .... ... ... | १२८ | १ |
| शूद्ररक्षाविधानम | ... ... ... | १२२ | १ | कुशकंडिका | ... ... ... | १२५ | २ | शूद्रवेदमंत्रविचारः | ... ... ... | १२९ | १ |
| रक्षाबंधनमंत्रः | ... ... ... | ,, | २ | लाजाहोमः... | ... ... .... | १२६ | २ | ग्रंथालंकारः | ... ... ... | ,, | ,, |
| तिलकमंत्रः | ... ... ... | १२३ | १ | अंतःपटश्लोकाः | ... ... .... | १२७ | १ | ग्रंथसमाप्तिः | ... ... .... | ,, | ३ |


इति संस्कारप्रकाशविषयाणामनुक्रमणिका समाप्ता।

॥ श्रीगणेशाय नमः ॥ जगतः पितरं शंभुं जगतो मातरं शिवाम् ॥ जगतो विघ्नहर्तारं नमामि गणनायकम् ॥१॥
कातीयपारस्करगृह्यसूत्राण्यनेकभाष्यस्मृतिपद्धतीश्च ॥ सतां च वाक्यानि विचार्य सम्यक्तनोमि संस्कारमुखं
प्रकाशम् ॥ २ ॥ गौडग्रंथविलोपं तु दृष्ट्वा समयभेदतः ॥ तदुद्धाराय कुर्वेऽहं ग्रंथं वै शिष्टसंमतम् ॥ ३ ॥ अथ
संस्काराः ॥ गर्भाधानं १ पुंसवनं २ सीमंतोन्नयनं ३ तथा ॥ जातकर्म ४ नामकर्म ५ निष्क्रमो ६ न्नाशनं ७
परम् ॥ ४ ॥ चौल कर्मो ८ पनयनं९ विवाहो१०दशमः स्मृतः ॥ संस्कारास्तु दशैवैते प्रोक्ता गृह्ये यजुर्विदाम् ॥५॥
अन्येपि कर्णवेधाद्याः संस्काराः शिष्टसंमताः ॥ शास्त्रान्तरोक्ता वक्ष्यन्ते तत्रतत्र प्रसंगतः ॥ ६ ॥ अथ संस्काराणां
फलानि मनुस्मृतौ—"वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ॥ कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह
च ॥ ७ ॥ गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबंधनैः ॥ बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ ८ ॥" स्मृतिसं
ग्रहेपि—"निषेकाद्बैजिकं चैनो गार्भिकं चापमृज्यते ॥ क्षेत्रसंस्कारसिद्धिश्च गर्भाधानफलं स्मृतम् ॥ ९ ॥ गर्भाद्भ
वेच्च पुंसूतेः पुंस्त्वस्य प्रतिपादनम् ॥ निषेकफलवज्ज्ञेयं फलं सीमन्तकर्मणः ॥ १० ॥ गर्भाम्बुपानजो दोषो जा

तात्सर्वोऽपि नश्यति ॥ आयुर्वर्चोऽभिवृद्धिश्च सिद्धिर्व्यवहृतेस्तथा ॥ ११ ॥ नामकर्मफलं त्वेतत्समुद्दिष्टं मनीषिभिः ॥ अन्नाशनान्मातृगर्भे मलाशी चापि शुध्यति ॥ १२ ॥ बलायुर्वर्चोवृद्धिश्च चूडाकर्मफलं स्मृतम् ॥ उपनीतेः फलं त्वेतद्द्विजतासिद्धिपूर्विका ॥ १३ ॥ वेदाधीत्यधिकारस्य सिद्धिर्ऋषिभिरीरिता ॥ विवाहस्य फलं ज्ञेयं त्रिवर्गकरणं परम् ॥ १४ ॥" याज्ञवल्क्यः--"ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ॥ निषेकाद्याः श्मशानान्तास्तेषां वै मंत्रतः क्रियाः ॥ १५ ॥ तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समंत्रकः ॥" यमस्मृतौ--"शूद्रोऽप्येवंविधः कार्यो विना मंत्रेण संस्कृतः ॥१६॥" स्मृत्यन्तरेपि--"स्त्रीणां चौलांतसंस्काराः प्रकर्तव्या अमंत्रकाः॥ पुंस्त्रीत्युभययोगस्तु विवाहः स यथाविधि" इति ॥ १७ ॥ अथ गर्भाधानादिसर्वसंस्कारोपयोगिगणेशादिपूजाप्रयोगः ॥ सुदिने प्रातर्नित्यावश्यकं कृत्वा सपत्नीकः ससंस्कार्यो यजमानः शुद्धपीठे प्राङ्मुख उपविश्य । आचम्य । प्राणानायम्य । देशकालौ संकीर्त्य ॥ अमुकगोत्रोऽमुकशर्मा करिष्यमाणामुककर्माङ्गतया मङ्गलस्नानमहं करिष्ये । इति संकल्प्य । यथाचारं मंगलवाद्यघोषपुरःसरं पतिपुत्रवतीभिर्वृद्धसुवासिनीभिर्हस्तैः सुगंधितैलाभ्यंजनं तिलामलकादीनां सर्वौषध्यादिसुगंधचूर्णेनोद्वर्तनमुष्णोदकेन स्नानमिदमेव मंगलस्नानं कुर्यात् ॥

ततो नवं श्वेतं सदशं स्ववर्णेन सदृशं सकृद्धौतं नान्यधारितमहतं वसनम् "ॐपरिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि। शतं च जीवामि शरदः पुरूची रायस्पोषमभिसँव्ययिष्ये ॥ १ ॥" इति मंत्रेण त्रिकच्छं परिधाय "ॐयशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती। यशो भगश्च मा विदद्यशो मा प्रतिपद्यताम् ॥ १ ॥" इति मंत्रेण चोत्तरीयेणात्मानमाच्छाद्याचामेत्। ततः "ॐयज्ञोपवीतम्परमम्पवित्रम्प्रजापतेर्यत्सहजम्पुरस्तात् ॥ आयुष्यमग्र्यम्प्रतिमुञ्च शुभ्रं यज्ञोपवीतम्बलमस्तु तेजः ॥ १ ॥" इति मंत्रेण नूतनयज्ञोपवीतं धृत्वाऽऽचामेत् ॥ ततः अहते वा क्षौमवस्त्रे पीतश्वेतरक्तरंजिते वा नीलीरंजितं विना पत्नी त्वमंत्रं परिधाय संस्कारीयं बालमपि यथा शोभितं च कुर्यात् ॥ ततः शुभासने शणवर्जिते प्राङ्मुख उदङ्मुखो वा उपविश्य स्वदक्षिणे पत्नीं तद्दक्षिणतः

१ जातके नामके चैव ह्यन्नप्राशनकर्मणि। निष्क्रामणे च चौले च पत्नी पुत्रश्च दक्षिणे ॥ गर्भाधाने पुंसवने सीमंतोन्नयने तथा। वधूप्रवेशने चैव पुनःसंधान एव च ॥ पूजने मधुपर्के स्यात्कन्यादाने तथैव च। कर्मस्वेतेषु वै भार्या दक्षिणे चोपवेशयेत् ॥ कन्यापुत्रविवाहे च गोदाने व्रतबंधने। आशीर्वादेऽभिषेके च पत्नी चोत्तरतो भवेत् ॥ वापीकूपतडागानां प्रतिष्ठायां महोत्सवे। व्रतादौ शांतिके चैव पत्नी स्यादुत्तरे सदा ॥ शांतिकेषु च सर्वेषु प्रतिष्ठोद्यापनादिषु। वामे उपविशेत्पत्नी, व्याघ्रस्य वचनं यथा ॥ स्मृत्यंतरे–गर्भाधाने विवाहे च ऋद्धिपुंसवने तथा। सीमंते धर्मकार्ये च पत्नीं कुर्याच्च दक्षिणे ॥ कन्यादाने वृषोत्सर्गे अध्वरे सोमदर्शने पत्नीं दक्षिणतः कुर्यादन्यथा वामतः शुभा ॥ वामे पत्नी त्रिषु स्थाने पित्र्याणां पादसेवने। रथाद्यारोहणे चैव ऋतुकाले च मैथुने ॥ इति ॥

सं०प्र० संस्कार्यं चोपवेश्य सुवर्णमुद्रिकादिधारणं कार्यम् ॥ ततः कुंकुमकेशरचंदनान्यतममंगलतिलकं यथाचारं
२ कृत्वा स्मार्तविधिना द्विराचम्य । प्राणानायम्य । शान्तिपाठं पठित्वा लक्ष्मीनारायणादिदेवान्प्रणमेत् ॥ अथ
शान्तिपाठः ॥ ॐ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासोऽअपरीतासऽउद्भिदः ॥ देवा नो यथा सदमिद्वृधेऽ
असन्नप्रायुवो रक्षितारो दिवेदिवे ॥ १ ॥ देवानाम्भद्रा सुमतिर्ऋजूयतान्देवानां ꣳ रातिरभि नो निवर्त
ताम् ॥ देवानां ꣳ सख्यमुपसेदिमा वयन्देवा नऽआयुः प्रतिरन्तु जीवसे ॥ २ ॥ तान्पूर्वया निविदा हूमहे
वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् ॥ अर्य्यमणम्वरुण ꣳ सोममश्विना सरस्वती नः सुभगा मयस्क
कां० १ रत् ॥ ३ ॥ तन्नो वातो मयोभुवातु भेषजन्तन्माता पृथिवी तत्पिता द्यौः ॥ तद्ग्रावाणः सोमसुतो मयोभुवस्त
दश्विना शृणुतन्धिष्ण्या युवम् ॥ ४ ॥ तमीशानं जगतस्तस्थुषस्पतिन्धियं जिन्वमवसे हूमहे वयम् ॥ पूषा नो
यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ ५ ॥ स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ॥
स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ ६ ॥ पृषदश्वा मरुतः पृश्निमातरः शुभं यावानो

विदथेषु जग्मयः ॥ अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवाऽअवसा गमन्निह ॥७॥ भद्रङ्कर्णेभिः शृणुयाम
देवा भद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवा ᳪ सस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥८॥ शतमिन्नु शरदोऽ
अन्ति देवा यत्रा नश्चक्रा जरसन्तनूनाम् ॥ पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥९॥ अदिति
र्द्यौरदितिरन्तरिक्षमदितिर्म्माता सपिता सपुत्रः ॥ विश्वे देवाऽअदितिः पञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम्
॥१०॥ तम्पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः ॥ नाकङ्गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठेऽअधि
रोचने दिवः ॥११॥ आयुष्यम्वर्चस्य ᳪ रायस्पोषमौद्भिदम् ॥ इद ᳪ हिरण्यं वर्चस्वज्जैत्रायाविशतादु माम् ॥१२॥
द्यौः शान्तिरन्तरिक्ष ᳪ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ॥ वनस्पतयः शान्तिर्विश्वेदे
वाः शान्तिर्ब्रह्म शान्तिः सर्व ᳪ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥१३॥ यतो यतः समीहसे ततो नोऽ
अभयङ्कुरु ॥ शन्नः कुरु प्रजाभ्योऽभयन्नः पशुभ्यः ॥१४॥ सुशान्तिर्भवतु । ॐ श्रीमन्महागणाधिपतये नमः ।
ॐ लक्ष्मीनारायणाभ्यां नमः । ॐ उमामहेश्वराभ्यां नमः ॥ ॐ वाणीहिरण्यगर्भाभ्यां नमः ॥ ॐ शचीपुरंदरा

सं०प्र० भ्यां नमः । ॐमातापितृचरणकमलेभ्यो नमः । ॐकुलदेवताभ्यो नमः । ॐइष्टदेवताभ्यो नमः । ॐग्रामदेव
३ ताभ्यो नमः । ॐस्थानदेवताभ्यो नमः । ॐवास्तुदेवताभ्यो नमः । ॐसूर्यादिग्रहेभ्यो नमः । ॐसर्वेभ्यो देवे
भ्यो नमः । ॐसर्वेभ्यो ब्राह्मणेभ्यो नमः । ॐपुण्यं पुण्याहं दीर्घमायुरस्तु । ॐसुमुखश्चैकदंतश्च कपिलो गज
कर्णकः । लंबोदरश्च विकटो विघ्ननाशो विनायकः ॥ १ ॥ धूम्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः । द्वादशैतानि
नामानि यः पठेच्छृणुयादपि ॥ २ ॥ विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ॥ संग्रामे संकटे चैव विघ्नस्तस्य न
जायते ॥ ३ ॥ शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजम् ॥ प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ ४ ॥ अभीप्सि
कां० १ तार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ॥ सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ ५ ॥ सर्वमंगलमांगल्ये शिवे सर्वा
र्थसाधिके ॥ शरण्ये त्र्यंबके गौरि नारायणि नमोऽस्तुते ॥ ६ ॥ सर्वदा सर्वकार्येषु नास्ति तेषागमंगलम् ॥
येषां हृदिस्थो भगवान्मङ्गलायतनो हरिः ॥ ७ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ॥ येषामिंदीवर
श्यामो हृदयस्थो जनार्दनः ॥ ८ ॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् ॥ सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थ

सिद्धये ॥ ९ ॥ सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः ॥ देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ १० ॥ वक्रतुंड महाकाय सूर्यकोटिसमप्रभ । अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ ११ ॥ इति प्रणम्य संकल्पं कुर्यात् ॥ अथ संकल्पः ॥ तत्रादौ दक्षिणहस्ते दूर्वायवगंधपुष्पजलादीन्यादाय । ॐ विष्णुर्विष्णुर्विष्णुः ॐतत्सद्ब्रह्म श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणो द्वितीये परार्धे विष्णुपदे श्रीश्वेतवाराह कल्पे वैवस्वतमन्वंतरे अष्टाविंशतितमे कलियुगे तत्प्रथमचरणे जंबूद्वीपे भरतखण्डे तत्रापि परमपवित्रे भारते वर्षे आर्यावर्तान्तर्गतब्रह्मावर्त्तैकदेशे अमुकक्षेत्रे श्रीगंगायमुनयोर्महानद्योरमुकदिग्भागे । नर्मदाया अमुके तटे गोदावर्या अमुके तटे वा देवब्राह्मणानां सन्निधौ श्रीमन्नृपविक्रमादित्यराज्यादमुकसंख्यापरिमिते श्रीशालिवाहन राज्यादमुकसंख्यापरिमिते वा प्रवर्त्तमानवत्सरे प्रभवादिषष्टिसंवत्सराणां मध्येऽमुकनाम्नि संवत्सरे अमुकायने अमुकर्त्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थे चंद्रे अमुकराशिस्थे सूर्ये अमुकराशिस्थे देवगुरौ शेषेषु ग्रहेषु यथायथाराशिस्थानस्थितेषु सत्सु ।

सं०प्र० एवंगुणविशेषणविशिष्टायां शुभपुण्यतिथावमुकगोत्रोऽमुकशर्मा अस्मिन्पुण्याहे ममास्य पुत्रस्य कन्याया वा
४ आयुर्वर्चोभिवृद्ध्यर्थममुकसंस्कारं करिष्ये । इति । तदंगत्वेन गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं
नांदीश्राद्धं च करिष्ये । इति च संकल्पयेत् ॥ तत्रादौ स्ववामे कर्मार्थंजलपूरितकलशार्चनम् ॥ ॐतत्त्वा यामि
ब्रह्मणा वंदमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशꣳस मा नऽआयुः प्रमोषीः ॥ १ ॥
अस्मिन्कलशे भगवन्वरुण इहागच्छ इह तिष्ठेति वरुणमावाह्य ॐअपांपतिवरुणाय नमः । इति गधाक्षतपुष्पैः
संपूज्य । दक्षिणहस्तेन कलशमालभ्याभिमंत्रयेत् ॥ कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः ॥ मूले तस्य
कां० १ स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ १ ॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुंधरा ॥ ऋग्वेदोऽथ यजुर्वेदः सा
मवेदो ह्यथर्वणः ॥ २ ॥ अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥ इत्यभिमंत्र्य । देवदानवसंवादे मथ्यमाने
महोदधौ ॥ ३ ॥ उत्पन्नोसि तदा कुंभ विधृतो विष्णुना स्वयम् । त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः
॥ ४ ॥ त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ॥ ५ ॥

आदित्या वसवो रुद्रा विश्वेदेवाः सपितृकाः ॥ त्वयि तिष्ठंति सर्वेऽपि यतः कामफलप्रदाः ॥ ६ ॥ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ ७ ॥ इति प्रार्थयेत् ॥ ततो गंगाद्यावाहनम् ॥ गंगे च यमुने चैव गोदावरि सरस्वति ॥ नर्मदे सिंधु कावेरि जलेऽस्मिन्सान्निधिं कुरु ॥१॥ अस्मिन्कलशे सर्वाणि तीर्थान्यावाहयामि पूजयामि नमस्करोमि ॥ इत्यावाह्य । ततो दूर्वाभिः कलशोदकेन । ॐअपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा । यः स्मरेत्पुंडरीकाक्षं सबाह्याभ्यंतरः शुचिः ॥ १ ॥ इति मंत्रेण पूजासंभारानात्मानं च प्रोक्षेत् ॥ ततो दीपस्थापनं पूजनं च । भो दीप त्वं ब्रह्मरूप अंधकारनिवारक ॥इमां मया कृतां पूजां गृह्णंस्तेजः प्रवर्धय ॥ १ ॥ ॐदीपाय नमः । इति गंधाक्षतपुष्पैर्दीपपूजनं कार्यम् ॥ अथ गणपतिपूजाप्रयोगः ॥ तत्रादौ ध्यानम् । श्वेतांगं श्वेतवस्त्रं सितकुसुमगणैः पूजितं श्वेतगंधैः क्षीराब्धौ रत्नदीपैः सुरतरुविमले रत्नसिंहासनस्थम् ॥ दोर्भिः पाशांकुशेष्टाभयधृतिविशदं चंद्रमौलिं त्रिनेत्रं ध्यायेच्छांत्यर्थमीशं गणपतिममलं श्रीसमेतं प्रसन्नम् ॥ १ ॥ ॐभूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः ध्यायामि । हे हेरंब त्वमेह्येहि अंबिकात्र्यं

सं० प्र० बकात्मज ॥ सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभ पितुः पितः ॥ नागास्य नागहार त्वं गणराज चतुर्भुज ॥ भूषितः
५ स्वायुधैर्दिव्यैः पाशांकुशपरश्वधैः ॥ २ ॥ आवाहयामि पूजार्थं रक्षार्थं च मम क्रतौ ॥ इहागत्य गृहाण त्वं
पूजां क्रतुं च रक्ष मे ॥ ३ ॥ ॐगुणानांन्त्वा गुणपतिर्ठंहवामहे प्रियाणांन्त्वा प्रियपतिर्ठंहवामहे निधीनान्त्वां
निधिपतिर्ठंहवामहे वुसो मम ॥ आहमंजानि गर्भधमा त्वमजासि गर्भधम् ॥ १ ॥ ॐभूर्भुवः स्वः सिद्धिबुद्धिस
हितमहागणपतये नमः गणपतिमावाहयामि ॥ ॐपुरुषऽएवेदर्ठंसर्वं यद्भूतं यच्च भाव्यम्॥ उतामृतत्वस्येशांनो
यदन्नेनातिरोहति ॥ २ ॥ ॐभूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः ॥ आसनं समर्पयामि ॥ ॐएतावां
कां० १ नस्य महिमातो ज्यायाँश्च पूरुषः ॥ पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥ ॐभू० सि० महा०
पाद्यं समर्पयामि ॥ ॐत्रिपादूर्ध्वऽउदैत्पुरुषः पादोऽस्येहाभवत्पुनः॥ततो विष्वङ्व्यक्रामत्साशनानशनेऽअभि
॥४॥ ॐभू० सिद्धि०महागण०अर्घ्यं समर्पयामि ॥ ॐततो विराडजायत विराजोऽअधिपूरुषः ॥ स जातोऽअत्य
रिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥ ॐभू० सिद्धि० महा० आचमनीयं समर्पयामि ॥ ॐतस्माद्यज्ञात्सर्वं

हुतः सम्भृतं पृषदाज्यम् ॥ पशूंस्तांश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये ॥ ६ ॥ ॐभू० सिद्धि० महा० स्नानं समर्पयामि ॥ ॐ पयः पृथिव्याम्पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः ॥ पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ ७ ॥ ॐभू० सिद्धि० महा० पयःस्नानं स० ॥ ततः शुद्धोदकस्नानम् ॥ ॐदधिक्राव्णोऽअकारिषञ्जिष्णो रश्वस्य वाजिनः ॥ सुरभि नो मुखा करत्प्रणऽआयूंषि तारिषत् ॥ ८ ॥ ॐभू० सिद्धि० महा० दधि स्नानं स०॥पुनः शुद्धस्नानम्॥ ॐघृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा॥ दिशः प्रदिशऽआदिशो विदिशऽउद्दिशोदिग्भ्यः स्वाहा ॥९॥ ॐभू० सिद्धि० महा० घृतस्नानं स०॥ पुनः शुद्धस्नानम् ॥ ॐ मधु वाताऽऋतायते मधु क्षरन्ति सिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः ॥ मधुनक्तमुतोषसो मधुमत्पार्थिवꣳ रजः ॥ मधु द्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्म्मधुमाँ२ऽअस्तु सूर्यः ॥ माध्वीर्ग्गावो भवन्तु नः ॥ १० ॥ ॐभू० सिद्धि० महागण० मधुस्नानं स०॥पुनःशुद्धस्नानम् ॥ ॐ अपाꣳरसमुद्वयसꣳसूर्ये सन्तꣳसमाहितम् ॥ अपाꣳरसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयाम गृहीतोसीन्द्राय त्वा जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वा

सं०प्र० जुष्टतमम् ॥ ११ ॥ ॐभू० सिद्धि० महागण० शर्करोदकस्नानं स०॥ पुनः शुद्धोदकस्नानम् ॥ ॐ पंचनद्यः÷स
६ रस्वतीमपियन्ति सस्रोतसः॥सरस्वती तु पञ्चधासोदेशेभवत्सरित् ॥ १२ ॥ ॐभू० सिद्धि० महा० पंचामृतस्नानं
सम०॥ॐवरुणस्योत्तम्भनमासि वरुणस्य स्कम्भसर्ज्जनी स्थो वरुणस्यऽऋतुसदन्यसि वरुणस्यऽऋतुसदनमसि
वरुणस्यऽऋतुसदनमासीद ॥ १३ ॥ ॐभू० सिद्धि० महागण० शुद्धस्नानं स० ॥ ॐ आपोहिष्ठा मयोभुवस्ता
नं ऊर्ज्जे दधातन ॥ महेरणाय चक्षसे ॥ १ ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः÷ ॥ उशतीरिव
मातरः÷ ॥ २ ॥ तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च नः÷ ॥ ३ ॥ १४ ॥ ॐभू०
कां० १ सिद्धि० महा० अभिषेकं सम० ॥ तत आचमनं स० ॥ ॐ युवा सुवासाः परिवीतऽआगात्सऽ उ श्रेयान्भ
वति जायमानः ॥ तं धीरासः कवयऽउन्नयन्ति स्वाध्यो३ मनसादेवयन्तः ॥ १५ ॥ ॐभू० सिद्धि०
महा० वस्त्रं स०॥ आचमनं०स०॥ ॐ यज्ञोपवीतम्परमम्पवित्रम्प्रजापतेर्यत्सहजम्पुरस्तात् ॥ आयुष्यमग्र्यम्प्र
तिमुञ्च शुभ्रं यज्ञोपवीतम्बलमस्तु तेजः ॥ १६ ॥ ॐभू० सिद्धि० महा० यज्ञोपवीतं स० ॥ आचमनं स० ॥

ॐ युञ्जन्तिब्रध्नमरुषञ्चरन्तुम्परितस्थुषः ॥ रोचन्ते रोचना दिवि ॥ युञ्जन्त्यस्य काम्या हरी विपक्षसारथे ॥
शोणाधृष्णूनृवाहसा ॥ १७ ॥ ॐभू० सिद्धि० महा० गंधं स० ॥ ॐ अक्षन्नमीमदन्तु ह्यव प्रियाऽअधू
षत ॥ अस्तोषत स्वभानवो विप्प्रानविष्ठया मती यो जान्विन्द्र ते हरी ॥ १८ ॥ ॐभू० सिद्धि० महा०
अक्षतान्स० ॥ ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामु
म्मऽइषाण सर्वलोकम्मऽइषाण ॥ १९ ॥ ॐभू० सिद्धि० महा० पुष्पाणि स० ॥ ॐ काण्डात्काण्डात्प्ररोहन्ती
परुषः परुषस्परि॥एवानो दूर्वे प्रतनु सहस्रेण शतेन च॥२०॥ ॐभू० सिद्धि० महा० दूर्वांकुरान्स० । ॐअहि
रिव भोगैः पर्य्येति बाहुं ज्यायाहेतिम्पपरिबाधमानः॥ हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमा७ंसम्परिपातु वि
श्वतः ॥२१॥ ॐभू० सिद्धि० महा०नानापरिमलद्रव्याणि समर्पयामि ॥ ॐ धूरसिधूर्व्वधूर्वन्तन्धूर्व्वतं योस्मान्धू
र्वति तन्धूर्व्वयम्वयन्धूर्वामः ॥ देवानामसिवह्नितमठ्ंसस्नितमम्पप्रितमञ्जुष्टतमं देवहूतमम् ॥ २२ ॥ ॐभू०
सिद्धि०महा०धूपं स०॥ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहासूर्य्योज्योतिर्ज्योतिः स्वाहा॥ अग्निर्वर्च्चोज्योतिर्वर्च्चः

सं०प्र० स्वाहा सूर्यो वर्च्चो ज्योतिर्वर्च्चः स्वाहा ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥ २३ ॥ ॐ भू० सिद्धि० महा०
॥ ७ ॥ दीपं० स० ॥ ॐ नाभ्याऽआसीदन्तरिक्षꣳशीर्ष्णोद्यौः समवर्त्तत । पद्भ्यांभूमिर्दिशः श्रोत्रात्तथालोकाँ२ऽअक
ल्पयन् ॥ २४ ॥ ॐ भू० सिद्धि० महा० नैवेद्यं स० ( ॐ भू० सि०म० मध्ये पानीयं स० । ॐ भू० उत्तरापो
शनं स० । ॐ भू० हस्तप्रक्षालनं समर्पयामि ॥ भू० मुखप्रक्षालनं स० । ॐ भू० चंदनेन करोद्वर्तनं समर्प
यामि ॥ ) भू० ॥ ॐ श्रीश्च ते लक्ष्मीश्च० ॥ २५ ॥ ॐभू० सिद्धि० महा० ऋतुकालोद्भवफलं स० ॥ ॐयाः
फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्प्रसूतास्ता नो मुञ्चन्त्वꣳ हसः ॥ २६ ॥ ॐभू० सिद्धि०
कां० १ महा० पूगीफलं तांबूलं च स० ॥ ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ॥ सदाधार
पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥ २७ ॥ ॐ भूर्भुवः स्वः सिद्धि० महा० दक्षिणां समर्पयामि ॥
ॐ इदꣳहविः प्रजननम्मेऽअस्तु दशवीरꣳसर्वगणꣳस्वस्तये ॥ आत्मसनि प्प्रजासनि पशुसनि लोकसन्यभ
यसनि ॥ अग्निः प्प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतोऽअस्मासु धत्त ॥ २८ ॥ ॐ भू० सिद्धि० महा० कर्पूर

नीराजनं स० ॥ ॐ सुप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ॥ देवा यद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पु शुम् ॥ २९ ॥ ॐभू० सिद्धि० महा० प्रदक्षिणात्रयं स० ॥ ॐ यज्ञेनं यज्ञमयजन्त देवास्तानि धर्म्माणि प्प्रथमा न्यांसन् ॥ ते ह नाकम्महिमानः सचन्त यत्र पूर्वे साध्याःसन्ति देवाः ॥ ३० ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहि तमहागणपतये नमः पुष्पांजलिं समर्पयामि॥ अथ विशेषार्घः॥ अर्घ्यपात्रे पुष्पचंदनाक्षतफलयुतं जलमादाय। जानुभ्यामवनिं गत्वा। "रक्षरक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक ॥ भक्तानामभयं कर्ता त्राता भव भवार्णवात् ॥ १ ॥ द्वैमातुर कृपासिंधो षाण्मातुराग्रज प्रभो ॥ वरद त्वं वरं देहि वांछितं वांछितार्थद ॥ २ ॥ गृहाणार्घ्यमिदं देव सर्वदेवनमस्कृत ॥ अनेन सफलार्घ्येण फलदोस्तु सदा मम ॥ ३ ॥" ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितमहा गणपतये नमः॥ विशेषार्घ्यं समर्पयामि ॥ इत्यर्घ्यं दद्यात् ॥ अथ प्रार्थना ॥ विघ्नेश्वराय वरदाय सुरप्रियाय लंबो दराय सकलाय जगद्धिताय ॥ नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमोनमस्ते॥ १ ॥ भक्ता र्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय॥विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय

सं०१० नमोनमस्ते ॥ २ ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः ॥ नमस्त रुद्ररूपाय करिरूपाय ते नमः ॥ ३ ॥
८ विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे ॥ भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ॥ ४ ॥ लंबोदर नमस्तुभ्यं
सततं मोदकप्रिय ॥ निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ ५ ॥ त्वां विघ्नशत्रुदलनेति च सुंदरेति भक्तप्रिये
ति सुखदेति वरप्रदेति ॥ विद्याप्रदेत्यघहरेति च ये स्तुवंति तेभ्यो गणेश वरदो भव नित्यमेव ॥ ६ ॥ अनया
पूजया सिद्धिबुद्धिलक्षलाभसहितमहागणपतिः सांगः सपरिवारः प्रीयतामित्यर्पयेत् ॥ इति गणपतिपूजाप्रयो
गः ॥ अथ स्वस्तिपुण्याहवाचनप्रयोगः ॥ तत्रादौ स्वाग्रे ताम्रकलशस्थापनम् ॥ तद्यथा ॥ महीद्यौरिति भूमिं
कां० १ स्पृष्ट्वा ॥ ॐ मुही द्यौः पृंथिवी चंनऽइमं युज्ञम्मिमिक्षताम् ॥ पिपृतान्नो भरींमभिः ॥ १ ॥ ओषधयः समिति
यवान्क्षिप्त्वा । ॐ ओषंधयुः सम॑वदन्त सोमेंन सुह राज्ञा ॥ यस्मै कृणोतिं ब्राह्मुणस्तᳪराजन्पारयामासि ॥२॥
आजिघ्रेति कलशं स्थापयेत् ॥ ॐ आजिंघ्र कुलशंम्मुह्या त्वांविशुन्त्विन्दंवः ॥ पुनंरुर्ज्जा निवंर्तस्व सा नंः सुह
स्रन्धुक्ष्वोरुधांरा पर्यस्वती पुनुर्म्माविंशताद्रुयिः ॥ ३ ॥ वरुंणस्योत्तमिति जलं पूरयेत् । ॐ वरुंणस्योत्तम्भंनम

सि वरुंणस्य स्कंभुसर्ज्जनी स्थो वरुंणस्यऽऋतुसदंन्युसि वरुंणस्यऽऋतसदंनमुसि वरुंणस्यऽऋतसदंनुमासीद ॥४॥ त्वां गंधर्वा इति गंधं प्रक्षिपेत् । ॐ त्वां गंधुर्वाऽअंखनुँस्त्वामिन्द्रुस्त्वाम्बृहुस्पतिंः ॥ त्वामोषधे सोमो राजा विद्वा न्यक्ष्मांदमुच्यत ॥ ५ ॥ याऽओषधीरिति सर्वौषधीः ॥ ॐयाऽओषंधीः पूर्वा जाता देवेभ्यस्त्रियुगम्पुरा ॥ मनैनु बुभ्रूणामुहर्ठं शुतं धामांनि सुप्त चं ॥ ६॥ काण्डात्काण्डादिति दूर्वाः । ॐ काण्डांकाण्डात्प्ररोहंन्ती परुंषः परुषु स्परिं ॥ एवानो दूर्वे प्रतंनु सुहस्रेण शतेनं च ॥ ७ ॥ अश्वत्थे व इति पंचपल्लवान् ॥ ॐ अुश्वुत्थे वोनिषदंन म्पुर्णे वों वसुतिष्कृता ॥ गोभाजुऽइत्किलांसथयत्सनवंथ पूरुंषम् ॥ ८ ॥ स्योनापृथिवीति सप्तमृदः ॥ ॐ स्योना पृथिवि नो भवानृक्षरा निवेशंनी ॥ यच्छांनुः शर्म्म सुप्रथाः ॥९॥ याः फलिनीरिति पूगीफलम् ॥ ॐ याः फलिनीर्याऽअफुलाऽअंपुष्पा याश्चंपुष्पिणीः ॥ बृहुस्पतिप्प्रसूतास्ता नों मुञ्चुन्त्वर्ठंहंसः ॥ १० ॥ परिवाजपतिरिति पंचरत्नानि ॥ ॐपुरिवाजंपतिः कुविरुग्निर्हुव्यान्यंक्रमीत् ॥ दधुद्रत्नांनि दाशुषें ॥ ११ ॥ हिरण्यगर्भेतिहिरण्यम् ॥ हिरुण्यगुर्भः सर्मवर्त्तताग्रे भूतस्यं जातः पतिरेकंऽआसीत् ॥ स दांधार पृथिवीं द्यामुतेमाङ्कस्मै देवायं हुविषा

स०प्र० ९ विधेम ॥ १२ ॥ युवासुवासा इति वस्त्रेण वेष्टयेत् ॥ ॐ युवांसुवासाः परिवीतऽआगात्सऽउ श्रेयान्भवति जायं
मानः ॥ तं धीरांसः कुवयऽउन्नयन्ति स्वाध्यो ३ मनसा देवयन्तः ॥ १३ ॥ पूर्णादर्वीति तंडुलपूर्णपात्रं न्यसेत् ॥
ॐ पूर्णा दर्वि परापत सुपूर्णा पुनरापत ॥ वस्नेव विक्रीणावहाऽइषमूर्जꣳशतक्रतो ॥ १४ ॥ तत्त्वायामीति वरुण
मावाह्य। ॐतत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः॥अहेडमानो वरुणेह बोध्युरुशꣳसमा
नऽआयुः प्रमोषीः॥१५॥ ॐ भूर्भुवः स्ववरुण इहागच्छ इह तिष्ठ ॥ इत्यावाह्य ॥ ॐ भूर्भुवः स्वः अपांपतिवरु
णाय नमः ॥ इति मंत्रेण षोडशोपचारैः संपूजयेत् ॥ ततो गंगाद्यावाहनम् ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा
कां० १ नदाः ॥ आयान्तु मम शांत्यर्थं दुरितक्षयकारकाः ॥ १ ॥ ततः कलशाभिमंत्रणम् ॥ कलस्य मुखे विष्णु०
इत्याद्यभिमंत्र्य ॥ देवदानवसंवादे० इत्यादि ॐ पाशपाणे नमस्तुभ्यं पद्मिनीजीवनायक ॥ पुण्याहवाचनं याव
त्तावत्त्वं सन्निधौ भव ॥ १ ॥ इति प्रार्थयेत् ॥ अथ पुण्याहवाचनम् ॥ अवनिकृतजानुमण्डलः कमलमुकुलस
दृशमंजलिं शिरस्याधायानंतरं दक्षिणेन पाणिना स्वर्णपूर्णकलशं धारयित्वा दीर्घा नागा नद्यो गिरयस्त्रीणि

विष्णुपदानि च ॥ ॐ त्रीणिपदा विचक्रमे विष्णुर्गोपाऽअदाभ्यः ॥ अतो धर्माणि धारयन् ॥ १ ॥ तेनायुः प्रमा
णेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवंतो ब्रुवंतु ॥ इति यजमानः ॥ पुण्यं पुण्याहं दीर्घमायुरस्त्विति द्विजाः ॥
( एवं सर्वत्र यजमानवचनोत्तरं ब्राह्मणाः प्रतिवचनं दद्युः ) ॥ ब्राह्मणानां हस्ते सुप्रोक्षितमस्तु ॥ ॐ शिवा
आपः सन्तु । ॐ संतु शिवा आपः ॥ ॐ सौमनस्यमस्तु । ॐ अस्तु सौमनस्यम् ॥ ॐ अक्षतं चारिष्टं चास्तु ।
ॐ अस्त्वक्षतमरिष्टं च ॥ ॐ गंधाः पांतु ॐ सौमंगल्यं चास्तु ॥ ॐ अक्षताः पांतु आयुष्यमस्तु ॥
ॐ पुष्पाणि पांतु सौश्रियमस्तु ॥ ॐ तांबूलानि पांतु ऐश्वर्यमस्तु ॥ ॐ दक्षिणाः पांतु बहुधनमस्तु ॥ ॐ
पुनरत्राः पांतु स्वर्चितमस्तु ॥ ततो यजमान आचार्यादीन्प्रणम्य श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चायुष्यं
चास्त्विति भवंतो ब्रुवंतु इति वदेत ॥ ते च श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चायुष्यं चास्तु इत्युक्त्वा
दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्त्विति यजमानं मूर्ध्न्यभिषिंचेयुः ॥ ॐ यं कृत्वा सर्ववेदयज्ञक्रियाकरण
कर्मारंभाः शुभाः शोभनाः प्रवर्तंते तमहमोंकारमादिंकृत्वा ऋग्यजुःसामाशीर्वचनं बहृषिमतं समनुज्ञातं भवद्भि

सं०प्र० रनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये ॥ ॐ वाच्यताम् ॥ ब्राह्मणानां हस्तेष्वक्षतान्दद्यात्ते चाशिषो दद्युः ॥ ॐ भद्र
१० ङ्कर्णेभिः शृणुयाम देवा भद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभिर्व्यशेमहि देवहितं यदायुः
॥ १ ॥ देवानां भद्रा सुमतिर्ऋजूयतान्देवानाᳬरातिरभि नो निवर्त्तताम् ॥ देवानाᳬसख्यमुपसेदिमा वयन्देवा
नऽआयुः प्रतिरन्तु जीवसे ॥ २ ॥ न तद्रक्षाᳬसि न पिशाचास्तरन्ति देवानामोजः प्रथमजᳬह्येतत् ॥ यो
बिभर्ति दाक्षायणᳬहिरण्यᳬस देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः ॥ ३ ॥ दीर्घायुस्त्वऽओषधे
खनिता यस्मै च त्वा खनाम्यहम् ॥ अथो त्वं दीर्घायुर्भूत्वा शतवल्शा विरोहतात् ॥४॥ द्रविणोदा द्रविणसस्तु
कां० १ रस्य द्रविणोदाः सनरस्य प्रियं सत् ॥ द्रविणोदा वीरवतीमिषन्नो द्रविणोदा रासते दीर्घमायुः ॥ ५ ॥ सविता
पश्चात्तात्सविता पुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सविता नः सुवतु सर्वतातिᳬ सविता नो रासतां दीर्घ
मायुः ॥ ६ ॥ नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ॥ भागं देवेभ्यो विदधात्यायन्प्रचन्द्रमास्तिरते
दीर्घमायुः ॥ ७ ॥ उच्चा दिवि दक्षिणावन्तोऽअस्थुर्येऽअश्वदाः सह ते सूर्येण ॥ हिरण्यदाऽअमृतत्वं भजन्ते वा

सुदाः सोम प्रतिरन्तुऽआयुः ॥ ८ ॥ इत्याशीर्वादः ॥ व्रतजपनियमतपःस्वाध्यायक्रतुदयादमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम्॥इति यजमानः॥समाहितमनसः स्मः॥इति द्विजाः॥प्रसीदन्तु भवन्तः इति यजमानः॥प्रसन्नाः स्म इति द्विजा ब्रूयुः॥ततो यजमानो ब्रूयात्। ॐ शान्तिरस्तु। अस्त्विति द्विजाः प्रतिवचनं सर्वत्र दद्युः॥ॐ पुष्टिरस्तु ॥ॐ तुष्टिरस्तु ॥ ॐ वृद्धिरस्तु ॥ ॐ अविघ्नमस्तु॥ॐ आयुष्यमस्तु॥ॐ आरोग्यमस्तु ॥ ॐ शिवंकर्मास्तु॥ ॐ कर्मसमृद्धिरस्तु॥ ॐ वेदसमृद्धिरस्तु ॥ ॐ शास्त्रसमृद्धिरस्तु॥ ॐ धनधान्यसमृद्धिरस्तु॥ ॐ पुत्रपौत्रसमृद्धिरस्तु ॥ ॐ इष्टसंपदस्तु ॥ ( बहिर्देशे जलं क्षिपेत् ) ॐ अरिष्टनिरसनमस्तु ॥ ॐ यत् पापं रोगम् अशुभम् अकल्याणं तद्दूरे प्रतिहतमस्तु ॥ पात्रमध्ये जलं क्षिपेत् ॥ ॐ यच्छ्रेयस्तदस्तु ॥ॐ उत्तरे कर्मणि निर्विघ्नमस्तु ॥ ॐ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ ॐ उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यंताम् ॥ ॐ तिथिकरणमुहूर्त्तनक्षत्रलग्नसंपदस्तु ॥ ( उदकसेकः ) ॐ तिथिकरणमुहूर्त्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयंताम् ॥ ॐ तिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे साधिदेवते प्रीयेताम् ॥ ॐ दुर्गापांचाल्यौ प्रीयेताम् ॥ ॐ अग्निपुरोगा

सं०१० विश्वे देवाः प्रीयंताम् ॥ ॐ इन्द्रपुरोगा मरुद्गणाः प्रीयंताम् ॥ ॐ माहेश्वरीपुरोगा उमामातरः प्रीयंताम् ॥ ॐ
११ अरुंधतीपुरोगा एकपत्न्यः प्रीयंताम् ॥ ॐ विष्णुपुरोगाः सर्वे देवाः प्रीयंताम् ॥ ॐ ब्रह्मपुरोगाः सर्वे वेदाः प्रीयं
ताम् ॥ ॐ ब्रह्म च ब्राह्मणाश्च प्रीयंताम् ॥ ॐ श्रीसरस्वत्यौ प्रीयेताम् ॥ ॐ श्रद्धामेधे प्रीयेताम् ॥ ॐ भगवती का
त्यायनी प्रीयताम् ॥ ॐ भगवती माहेश्वरी प्रीयताम् ॥ ॐ भगवती ऋद्धिकरी प्रीयताम् ॥ ॐ भगवती सिद्धि
करी प्रीयताम् ॥ ॐ भगवती पुष्टिकरी प्रीयताम् ॥ ॐ भगवती तुष्टिकरी प्रीयताम् ॥ ॐ भगवंतौ विघ्नविना
यकौ प्रीयेताम् ॥ ॐ सर्वाः कुलदेवताः प्रीयंताम् ॥ ॐ सर्वा ग्रामदेवताः प्रीयंताम् ॥ २१ ॥ (पात्रान्तरे)
कां० १ ॐ हताश्च ब्रह्मद्विषः ॥ ॐ हताश्च परिपंथिनः ॥ ॐ हताश्च विघ्नकर्तारः ॥ शत्रवः पराभवं यान्तु ॥ ॐ शाम्यन्तु
घोराणि ॥ ॐ शाम्यन्तु पापानि ॥ ॐ शाम्यंत्वीतयः ॥ ६ ॥ (पुनः प्रथमे पात्रे) ॐ शुभानि वर्द्धंताम् ॥
ॐ शिवा आपः संतु ॥ ॐ शिवा ऋतवः संतु ॥ ॐ शिवा ओषधयः संतु ॥ ॐ शिवा नद्यः संतु ॥ ॐ शिवा
गिरयः संतु ॥ ॐ शिवा अतिथयः संतु ॥ ॐ शिवा अग्नयः संतु ॥ ॐ शिवा आहुतयः संतु ॥ ॐ अहोरात्रे

शिवे स्याताम् ॥ ॐ निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो नऽओषधयः पच्यन्तां योगक्षेमो नः कल्प
ताम् ॥ १ ॥ ॐ शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयंताम् ॥
ॐ भगवान्नारायणः प्रीयताम् ॥ ॐ भगवान्पर्जन्यः प्रीयताम् ॥ ॐ भगवान्स्वामी महासेनः प्रीयंताम् ॥ पुण्या
हकालान्वाचयिष्ये ॥ इति यजमानः ॥ ॐ वाच्यताम् ॥ इति द्विजप्रतिवचनम् ॥ ब्राह्मं पुण्यं महद्यच्च सृष्ट्यु
त्पादनकारकम् ॥ वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवंतु नः ॥ १ ॥ भो ब्राह्मणा मया क्रियमाणस्य मम पुत्र
स्य वा कन्यायाश्चामुकसंस्कारकर्मणः पुण्याहं भवंतो ब्रुवंतु ॥ ॐ पुण्याहं ३ ( एवं वचनं प्रतिवचनं च त्रिर्वि
प्रा ब्रूयुः ) ॐ पुनंतु मा देवजनाः पुनन्तु मनसा धियः ॥ पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥ १ ॥
पृथिव्यामुद्धृतायान्तु यत्कल्याणं पुरा कृतम् ॥ ऋषिभिः सिद्धगंधर्वैस्तत्कल्याणं ब्रुवन्तु नः ॥ १ ॥ भो ब्राह्मणा
मया क्रियमाणस्य मम पुत्रस्य पुत्र्या वाऽमुकसंस्काराख्यकर्मणः कल्याणं भवंतो ब्रुवंतु ॥ ॐ कल्याणम्
३ ॥ ॐ यथेमां वाचं कल्याणीमावदानि जनेभ्यः ॥ ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय च ॥

सं०१० प्रियो देवानां दक्षिणायै दातुरिह भूयासमुयम्मे कामः समृध्यतामुपमादो नमतु ॥ १ ॥ सागरस्य यथा वृद्धि
१२ महालक्ष्म्यादिभिः कृता ॥ संपूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः ॥ १ ॥ भो ब्राह्मणा मया क्रियमाणस्य
मम पुत्रस्यपुत्र्या वाऽमुकसंस्काराख्यकर्मणः ऋद्धिं भवंतो ब्रुवंतु ॥ ॐ ऋध्यताम् ३ ॥ ॐ सुत्रस्युऽऋर्द्धि
रुस्यगंन्म ज्योतिरमृताऽअभूम ॥ दिवंम्पृथिव्याऽअध्यारुहामा विंदाम देवान्त्स्वर्ज्योतिः ॥ १ ॥ स्वस्तिस्तु
याऽविनाशाख्या पुण्यकल्याणवृद्धिदा ॥ विनायकप्रिया नित्यं तां च स्वस्ति ब्रुवंतु नः ॥ १ ॥ भो ब्राह्मणा मया
क्रियमाणस्य मम पुत्रस्य पुत्र्या वाऽमुकसंस्काराख्यकर्मणः स्वस्ति भवंतो ब्रुवंतु ॥ ॐ स्वस्ति ॥ ३ ॥ ॐ
कां० १ स्वस्ति नुऽइंद्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः॥स्वस्ति नुस्ताक्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु
॥ १ ॥ समुद्रमथनाज्जाता जगदानंदकारिका ॥ हरिप्रिया च मांगल्या तां श्रियं च ब्रुवंतु नः ॥१॥ भो ब्राह्मणा
मया क्रियमाणस्य मम पुत्रस्य पुत्र्या वाऽमुकसंस्काराख्यकर्मणः श्रीरस्त्विति भवंतो ब्रुवंतु॥ ॐ अस्तु श्रीः३॥
ॐ श्रीश्चं ते लुक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्मंऽइषाण

सर्वलोकम्मंऽइषाण ॥ १ ॥ अस्मिन्पुण्याहवाचने न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनाच्छ्री महागणपतिप्रसादाच्च सर्वः परिपूर्णोऽस्तु ॥ ॐ अस्तु परिपूर्णः ॥ ॥ अथाभिषेकः ॥ ॥ ( अभिषेके पत्नी वामतः ) एकस्मिन्कलशे वरुणोदकं गृहीत्वा अविधुराश्चत्वारो ब्राह्मणा दूर्वाग्रपल्लवैर्यजमानमभिषिंचेयुः ॥ तत्र मंत्राः ॥ ॐ पयः पृथिव्याम्पय ओषधीषुपयो दिव्युन्तरिक्षे पयोधाः ॥ पयस्वतीः प्रदिशः संतु मह्यम् ॥ १ ॥ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः ॥ सरस्वती तु पञ्चधासोदेशे भवत्सरित् ॥ २ ॥ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भ सर्जनी स्थो वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसदनमसि वरुणस्यऽऋत सदनमासीद ॥ ३ ॥ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मां ॥ ४ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ सरस्वत्यै वाचो यन्तुर्यन्त्रियेदधामिबृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ ॥ ५ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ ६ ॥ देवस्य त्वा सवितुः प्रसवेऽश्वि

सं० प्र० नोर्ब्बाहुभ्यांम्पूष्णो हस्ताभ्याम् ॥ अश्विनोर्भैषंज्येन तेजंसे ब्रह्मवर्च्चसा । याभिषिंञ्चामि सरंस्वत्यै भैषंज्येन वीर्य्या
१२ यान्नाद्यांयाभिषिंञ्चामीन्द्रंस्येन्द्रियेण बलांय श्रियै यशंसेऽभिषिंञ्चामि ॥ ७ ॥ विश्वांनि देव सवितर्दुरितानि परा
सुव यद्भद्रं तन्नऽआसुंव ॥ ८ ॥ धामुच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिंः ॥ सचेतसो विश्वे देवा यज्ञं म्प्रावन्तु नः
शुभे ॥ ९ ॥ त्वँय्यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरंः ॥ रक्षांतोकमुत त्मना ॥ १० ॥ अन्नंपतेन्नंस्य नो धे
ह्यनमीवस्य शुष्मिणंः ॥ प्रप्रंदातारंन्तारिषऽऊर्ज्जंन्नो धेहि द्विपदे चतुंष्पदे ॥ ११ ॥ पालाशं भवति तेन
ब्राह्मणोभिषिंञ्चति ब्रह्म वै पालाशो ब्रह्मणैवैनमेतदभिषिञ्चति ॥१२॥ ॐ द्यौः शान्तिरन्तरिक्षꣳशान्तिः पृथिवी
कां० १ शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्मशान्तिः सर्वꣳशान्तिः शान्तिरेव
शान्तिः सा मा शान्तिरेधि ॥ १३ ॥ अमृताभिषेकोऽस्तु ॥ शान्तिः शान्तिः शान्तिः ॥ सुशांतिर्भवतु ॥ इत्यभि
षेकः॥ततः पुण्याहवाचनसांगतासिद्धये ब्राह्मणेभ्यो दक्षिणादानम् ॥ अनेन पुण्याहवाचनेन श्रीप्रजापतिः प्रीय
ताम् ॥ इति पुण्याहवाचनम् ॥ ॥ अथ मातृकापूजनम् ॥ ॥ तत्रादौ ॥ गोधूमादिधान्यपुंजेषु मोदादिषट्

विनायकावाहनम् ॥ तद्यथा ॥ "मोदश्चैव प्रमोदश्च सुमुखो दुर्मुखस्तथा ॥ अविघ्नो विघ्नकर्ता च षडेते विघ्नना
यकाः ॥ १ ॥" ॐ मोदाय नमः मोदमावाहयामि ॥ १ ॥ ॐ प्रमोदाय नमः प्रमोदमावाहयामि ॥ २ ॥
ॐ सुमुखाय नमः सुमुखमावाहयामि ॥ ३ ॥ ॐ दुर्मुखाय नमः दुर्मुखमावाहयामि ॥ ४ ॥ ॐ अविघ्नाय नमः
अविघ्नमावाहयामि ॥ ५ ॥ ॐ विघ्नकर्त्रे नमः विघ्नकर्तारमावाहयामि ॥ ६ ॥ ॐ मनोजूतिर्जुषतामाज्यस्य
बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳसमिमं दधातु ॥ विश्वे देवास इह मादयन्तामो ३ म्प्रतिष्ठ ॥ १ ॥ ॐ भूर्भुवः
स्वः मोदादिषड्विनायकाः सुप्रतिष्ठिता वरदा भवंत्विति प्रतिष्ठाप्य ॥ ॐमोदादिषड्विनायकेभ्यो नमः ॥ इति
नाममंत्रेण पाद्यादिषोडशोपचारैः संपूज्य अनया पूजया मोदादिषड्विनायकाः प्रीयन्तामिति वदेत् ॥ इति
षड्विनायकपूजनम् ॥ ॥ अथ मातृकापूजनम् ॥ ॥ तत्रायं क्रमः ॥ "गौरी पद्मा शची मेधा सावित्री विज
या जया ॥ देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ १ ॥ हृष्टिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता ॥ गणे
शेनाधिका ह्येता वृद्धौ पूज्यास्तु षोडश ॥ २ ॥" ॐ गणेशाय नमः गणेशमावाहयामि ॥ १ ॥ ॐगौर्य्यै नमः

०प्र० गौरीमावाहयामि ॥ २ ॥ ॐ पद्मायै नमः पद्मामावा० ॥ ३ ॥ ॐ शच्यै नमः शचीमावा० ॥ ४ ॥ ॐ मेधा-
१४ यै नमः मेधामावा० ॥ ५ ॥ ॐ सावित्र्यै नमः सावित्रीमावा० ॥ ६ ॥ ॐ विजयायै नमः विजयामावा ॥ ७ ॥
ॐ जयायै नमः जयामावा० ॥ ८ ॥ ॐ देवसेनायै नमः देवसेनामामावा० ॥ ९ ॥ ॐ स्वधायै नमः स्वधामा
वा० ॥ १० ॥ ॐ स्वाहायै नमः स्वाहामावा० ॥ ११ ॥ ॐ मातृभ्यो नमः मातृरावाहयामि ॥ १२ ॥ ॐ लोक
मातृभ्यो नमः लोकमातृरावा० ॥ १३ ॥ ॐ हृष्ट्यै नमः हृष्टिमावा० ॥ १४ ॥ ॐ पुष्ट्यै नमः पुष्टिमा० ॥१५॥
ॐ तुष्ट्यै नमः तुष्टिमा० ॥ १६ ॥ ॐ आत्मनः कुलदेवतायै नमः आत्मनः कुलदेवतामावाहयामि ॥ १७ ॥
कां० १ इत्यावाह्य ॥ ॐ मनोजूतिरिति प्रतिष्ठाप्य ॥ ॐ गौर्य्यादिषोडशमातृकाभ्यो नमः ॥ इति नाममंत्रेण षोडशोप
चारैः संपूज्य अनया पूजया गणपतिसहितगौर्यादिषोडशमातरः प्रीयन्तामिति वदेत् ॥ इति षोडशमातृकापूज
नम् ॥ ॥ अथ घृतमातरः ॥ ॥ एताः कुड्ये फलके वा कुंकुमाक्तेन घृतेन दक्षिणोत्तराः सप्त धारारूपाः
कुर्यात् ॥ तत्र मंत्रः ॥ ॐ वसोः॑ पवित्र॑मसि शतधा॑रं वसोः॑ पवित्र॑मसि सहस्र॑धारम् ॥ देवस्त्वा॑ सविता पु॑नातु

वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ॥ १ ॥ अथ घृतमातृकानामानि "श्रीश्च लक्ष्मीर्धृतिर्मेधा पुष्टिः
श्रद्धा सरस्वती ॥ मांगल्येषु प्रपूज्यंते सप्तैता घृतमातरः ॥ १ ॥" ॐ श्रियै नमः श्रियमावाहयामि ॥ १ ॥
ॐ लक्ष्म्यै नमः लक्ष्मीमावा० ॥ २ ॥ ॐ धृत्यै नमः धृतिमावा० ॥ ३ ॥ ॐ मेधायै नमः मेधामावा० ॥ ४ ॥
ॐ पुष्ट्यै नमः पुष्टिमा० ॥ ५ ॥ ॐ श्रद्धायै नमः श्रद्धामा० ॥ ६ ॥ ॐ सरस्वत्यै नमः सरस्वतीमावाहयामि
॥ ७ ॥ इत्यावाह्य ॥ ॐ मनो जूतिरिति प्रतिष्ठाप्य ॥ ॐ घृतमातृकाभ्यो नमः॥इति नाम मंत्रेण षोडशोपचारैः
संपूज्य "ॐ समख्ये देव्याधिया सन्दक्षिणयोरुचक्षसा ॥ मा मऽआयुः प्रमोषीर्मोऽअहन्तवं वीरम्बिदेय तव
देवसन्दृशी ॥ १ ॥" इति प्रार्थयेत् ॥ ॥ अथायुष्यमंत्राः ॥ ॥ ॐ आयुष्यं वर्च्चस्यᳬरायस्पोषमौद्भिदम् ॥
इदᳬहिरण्यम्वर्च्चस्वज्जैत्रायाविशतादुमाम् ॥ १ ॥ न तद्रक्षांᳬसि न पिशाचास्तरन्ति देवानामोजः प्रथमजᳬह्ये
तत् ॥ यो बिभर्ति दाक्षायणᳬहिरण्यᳬस देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः ॥ २ ॥ यदाब
ध्नन्दाक्षायणा हिरण्यᳬशतानीकाय सुमनस्यमानाः ॥ तन्मऽआबध्नामि शतशारदायायुष्मानुजरदष्टिर्यथासम्

सं०प्र० ॥ ३ ॥ इत्यायुष्यमंत्रजपः ॥ ॥ अथ नांदीश्राद्धम् ॥ ॥ आचमनं प्राणायामं च कृत्वा ॥ उदङ्मुखः दक्षि
१५ णोत्तरक्रमेण ॥ नांदीमुखाः सत्यवसुसंज्ञकाः विश्वेदेवाः ॐ भूर्भुवः स्वः इदंवः पाद्यं पादावनेजनं पादप्रक्षालनं
वृद्धिः ॥ १ ॥ गोत्राः मातृपितामही प्रपितामह्यः नांदीमुख्यः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षा
लनं वृद्धिः ॥२॥ गोत्राः पितृपितामहप्रपितामहाः नांदीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षा
लनं वृद्धिः ॥३॥द्वितीयगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नांदीमुखाः ॐभूर्भुवः स्वः इदं वः
पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥ ४ ॥ ततो देशकालौ संकीर्त्य क्रियमाणस्य मम पुत्रस्य पुत्र्या वा
कां० १ अमुकसंस्काराङ्गत्वेन सांकल्पिकेन विधिना ब्राह्मणयुग्मभोजनपर्याप्तान्ननिष्क्रयीभूतयथाशक्तिहिरण्येन नां
दीश्राद्धं करिष्ये॥ इति संकल्प्य आसनदानम् ॥ सत्यवसुसंज्ञकानां विश्वेषां देवानां नांदीमुखानाम् ॐ भूर्भुवः
स्वः इदमासनं सुखासनम् । नांदीश्राद्धे क्षणौ क्रियेताम् ॥ ॐ तथा प्राप्नुतां भवन्तौ प्राप्नवाव ॥ १ ॥ गोत्राणां
मातृपितामहीप्रपितामहीनां नांदीमुखीनाम् ॐ भूर्भुवः स्वः इदमासनं सुखासनम् ॥ नांदीश्राद्धे क्षणौ क्रियेताम् ॥

ॐ तथा प्राप्नुतां भवन्तौ प्राप्नवाव ॥ २ ॥ गोत्राणां पितृपितामहप्रपितामहानां नांदीमुखानाम् । ॐ भूर्भुवः स्वः इदमासनं सुखासनम् । नांदीश्राद्धे क्षणौ क्रियेताम् । ॐ तथा प्राप्नुतां भवंतौ प्राप्नवाव ॥३॥ द्वितीयगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां नांदीमुखानाम् ॐ भूर्भुवः स्वः इदमासनं सुखासनम् । नांदी श्राद्धे क्षणौक्रियेताम् ॐ तथा प्राप्नुतां भवंतौ प्राप्नवाव ॥४॥ ततो गंधादिदानम् ॥ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नांदीमुखेभ्यः इदं गंधाद्यर्चनं स्वाहा संपद्यतां वृद्धिः ॥१॥ गोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नांदी मुखीभ्यः इदं गंधाद्यर्चनं स्वाहा संपद्यतां वृद्धिः ॥ २ ॥ गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नांदीमुखेभ्यः इदं गंधाद्यर्चनं स्वाहा संपद्यतां वृद्धिः ॥ ३ ॥ द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यो नांदीमुखेभ्यः इदं गंधाद्यर्चनं स्वाहा संपद्यतां वृद्धिः ॥ ४ ॥ भोजननिष्क्रयद्रव्यदानम् ॥ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नांदीमुखेभ्यो ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचिद्धिरण्यं दत्तममृतरूपेण स्वाहा संप द्यतां वृद्धिः ॥ १ ॥ गोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नांदीमुखीभ्यो ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्नि

सं०प्र० ष्क्रयीभूतं किंचिद्धिरण्यं दत्तममृतरूपेण स्वाहा संपद्यतां वृद्धिः ॥ २ ॥ गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो[1]
१६ ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचिद्धिरण्यं दत्तममृतरूपेण स्वाहा संपद्यतां वृद्धिः ॥ ३ ॥ द्विती
यगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यः[2] सपत्नीकेभ्यो ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं
किंचिद्धिरण्यं दत्तममृतरूपेण स्वाहा संपद्यतां वृद्धिः ॥ ४ ॥ सक्षीरमुदकदानम् ॥ नांदीमुखाः सत्यवसुसंज्ञकाः
विश्वेदेवाः प्रीयंताम् ॥ १ ॥ गोत्राः मातृपितामहीप्रपितामह्यो नांदीमुख्यः प्रीयंताम् ॥ २ ॥ गोत्राः पितृपितामह
प्रपितामहा नांदीमुखाः प्रीयंताम् ॥ ३ ॥ द्वितीयगोत्रा मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नांदी
कां० १ मुखाः प्रीयंताम् ॥ ४ ॥ आशिषो ग्रहणम् ॥ गोत्रं नो वर्द्धताम् । वर्द्धतां वो गोत्रम् ॥ दातारो नोऽ
भिवर्धताम् । अभिवर्धतां वो दातारः ॥ वेदाश्च नोऽभिवर्धताम् । अभिवर्धतां वो वेदाः ॥ संततिर्नोऽभिवर्द्धताम् ।
वर्धतां वः संततिः ॥ श्रद्धा च नो मा व्यगमत् । मागमद्वः श्रद्धा ॥ बहु देयं च नोस्तु । अस्तु वो बहुदेयम् ॥
अन्नं च नो बहु भवेत् । भवतु वो बह्वन्नम् ॥ अतिथींश्च लभेमहि । लभंतां वोऽतिथयः ॥ याचितारश्च नः संतु ।

१ प्रपितामहेभ्यो नांदीमुखेभ्यो   २ सपत्नीकेभ्योनांदीमुखेभ्यो

संतु वो याचितारः॥मा च याचिष्म कंचन। मा च याचिद्वं कंचन ॥ एता आशिषः सत्याः संतु । संत्वेताः सत्या
आशिषः ॥ ॥ अथ दक्षिणादानम् ॥ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नांदीमुखेभ्यः कृतस्य नांदीश्राद्धस्य
फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे॥१॥(यवमूलमार्द्रकम्) गोत्राभ्यो
मातृपितामहीप्रपितामहीभ्यो नांदीमुखीभ्यः कृतस्य नांदीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्र
यीभूतां दक्षिणां दातुमहमुत्सृजे॥२॥गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नांदीमुखेभ्यः कृतस्य नांदीश्राद्धस्य
फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे ॥ ३ ॥ द्वितीयगोत्रेभ्यो मातामहप्र
मातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नांदीमुखेभ्यः कृतस्य नांदीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामल
कयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे॥४॥ततो नांदीश्राद्धं संपन्नम् । सुसंपन्नम्॥वाजेवाजेति विसृज्य ।
ॐ वाजेवाजेवतवाजिनो नोधनेषु विप्राऽअमृताऽऋतज्ञाः ॥ अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभि
र्देवयानैः॥ १ ॥ आमा वाजस्येत्यनुव्रज्य । ॐ आमा वाजस्य प्रसवो जगम्यादेमे द्यावा पृथिवी विश्वरूपे ॥

स०प्र० आमां गन्ताम्पितरां मातरा चामुं सोमोऽअमृतत्वेन गम्यात् ॥ १॥ अस्मिन्नांदीश्राद्धे न्यूनातिरिक्तो यो विधिः 4
१७ स उपविष्टब्राह्मणानां वचनात् नांदीमुखप्रसादात्सर्वः परिपूर्णोऽस्तु । अस्तु परिपूर्णः ॥ इति साकल्पिक नां
दीश्राद्धम् ॥ ( यदा तद्दिने ग्रहयज्ञं करोति तदा देशकालौ संकीर्त्तनांते "अस्य कुमारस्य कन्याया वा ग्रहा
नुकूलतासिद्ध्यर्थं ग्रहयज्ञं करिष्ये।" इति संकल्प्य गणपतिपूजनादि नांदीश्राद्धांतं पूर्ववत्कृत्वा आचार्यादिवरणं
दिग्रक्षणं भूमिपूजनमग्निस्थापनं नवग्रहस्थापनं कुशकाण्डिकां ग्रहहोमादिहोमशेषं च मत्कृतशांतिप्रकाशोक्त
क्रमेण सर्वं कुर्यादत्र विस्तरभयान्नोक्तम् ॥ ) इति श्रीरत्नगढनिवासिना गौडवंशोद्भवश्रीरामकृष्णामरचंद्रयोः
कां० १ पौत्रेण श्रीकस्तूरीचंद्रात्मजेन श्रीचतुर्भुजदत्तसूनुना श्रीमहादेवभक्तेन नानानिबंधकर्त्रा पण्डितश्रीचतुर्थीलाल
शर्म्मणा विरचिते संस्कारप्रकाशे प्रयोगनिबंधे सर्वसंस्कारोपयोगिश्रीगणपत्यादिपूजाप्रयोगनिरूपणं नाम प्रथ
मः काण्डः समाप्तः ॥ १ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ श्रीगणेशाय नमः ॥ ॥ वंदे महेश्वरं सांबं सपुत्रं सगणं सदा ॥ यं नत्वा कृतकृत्योहं ग्रंथनिर्माणकर्म्मणि॥ १॥
अथ गर्भाधानादिसंस्काराणां कातीयपारस्करसूत्रानुसारेण समंत्रकाः प्रयोगा लिख्यन्ते ॥ तत्र तावद्गर्भाधान
संस्कारप्रयोगः॥तच्च ऋतुदर्शनमारभ्य आद्यरात्रिचतुष्कं पर्वादिनिषिद्धदिनानि च वर्जयित्वा ज्योतिःशास्त्रोक्ते
शुभे दिने शुभकाले पुत्रार्थिना युग्मासु रात्रिषु कन्यार्थिना तु अयुग्मासु रात्रिषु च कार्य्यम् ॥ तत्रायं क्रमः ॥
तत्र ऋतुमती स्त्री स्नाता चतुर्थादिशुभदिने नूतनवस्त्रं कंचुकीं च परिधाय माल्याभरणैरलंकृत्य प्रातस्तूष्णीमा
दित्यमुपतिष्ठेत् ॥ ततः पतिः स्नातः कृतनित्यक्रियः शुभासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य देश
कालौ संकीर्त्य अस्या मम भार्यायाः प्रथमगर्भातिशयद्वारा अस्यां जनिष्यमाणसर्वगर्भाणां बीजगर्भसमुद्भवै
नोनिबर्हणार्थं गर्भाधानाख्यसंस्कारकर्म करिष्ये। तदंगविहितं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं
नांदीश्राद्धं च करिष्ये । इति च संकल्प्य गणपतिपूजनादि नांदीश्राद्धांतं पूर्वोक्तं सर्वं कृत्वा विप्राशिषो गृहीत्वा
मातृविसर्जनादिकं संपाद्य "ॐ अ॒दि॒त्यङ्गर्भम्पय॑सा॒ सम॑ङ्ग्धि स॒हस्र॑स्य प्र॒ति॒मां वि॒श्वरू॑पम् ॥ परि॑वृङ्ग्धि

हरंसु माभिर्मथंस्थाः शतायुंषङ्कृणुहि चीयमानाः ॥ १ ॥" इति मंत्रेण दंपतिभ्यां सूर्यावलोकनं नमस्कारश्च ॥ एवं दिवसकर्म कृत्वा रात्रावभिगमनादिकं कुर्यात् ॥ तद्यथा । सायंकालिकं नित्यकर्म कृत्वोभौ शुक्लांबरधारणानुलेपनमाल्याभरणालंकृतौ सदीपे शयनागारे सुखशय्याप्रसारितशुभमंचकमारुह्य सुमुहूर्ते स्त्रियमुत्तानां प्राक्शिरः शायितां कृत्वा भर्त्ता तस्या नाभिदेशे हस्तं दत्त्वाऽभिमृश्य जपेत् ॥ ॐ पूषा भगंᳬसविता मे ददातु रुद्रः कल्पयतु ललामगुम्विष्णुर्योनिङ्कल्पयतु त्वष्टा रूपाणि पिंᳬशतु ॥ आसिञ्चतु प्रजापतिर्धाता गर्भंदधातु ते ॥१॥ गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके ॥ गर्भं तेऽश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ २ ॥ तेजो वैश्वानरो दद्यादथ ब्रह्मानुमंत्रयते ॥ ब्रह्मा गर्भन्दधातु ते ॥ ३ ॥ ॥ अथाभिगमनम् ॥ ॥ ॐ गायत्रेणत्त्वा



च्छन्दंसा मन्थामि त्रैष्टुभेन त्त्वा च्छंदंसा मन्थामि जागतेन त्वा च्छंदंसा मन्थामि ॥ १ ॥ रेतो मूत्रं विजंहाति योनिंम्प्रविशदिन्द्रियम् ॥ गर्भो जरायुणावृंतऽउल्बंञ्जहाति जन्मंना ॥ ऋतेनं सत्यमिन्द्रियं विपानंᳬशुक्रमन्धंसऽइन्द्रस्येन्द्रियमिदम्पयोऽमृतुम्मधुं ॥ २ ॥ इति मंत्राभ्यां रेतःस्रावणम् ॥ अभिगमनोत्तरं तस्याः दक्षिण

स्कंधस्योपरि हस्तं नीत्वा तेन हृदयमालभते ॥ तत्र मंत्रः ॥ ॐ यत्ते सुशीमे हृदयन्दिवि चन्द्रमसि श्रितम् ॥
वेदाहन्तन्मान्तद्विद्यात् ॥ पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम् ॥ १ ॥ ततः कृतस्य
कर्मणः सांगतासिद्ध्यर्थं यथाशक्ति ब्राह्मणान्भोजयिष्ये । तेन श्रीकर्माङ्गदेवता प्रीयताम् ॥ ततो ब्राह्मणेभ्यो
दक्षिणां दत्त्वा तैराशिषो गृहीत्वा मातृविसर्जनं कुर्यात् ॥ अतोऽनंतरमृतावृतौ पर्वश्राद्धवर्जमभिगमनं कार्यं
यथा कामी वा भवेत् ॥ सा यदि गर्भं न दधीत तदौषधं पतिः कुर्यात् ॥ तद्यथा ॥ ऋतुस्नातायां चतुर्थेऽहनि वा
षोडशरात्रिमध्ये कस्मिंश्चिद्युग्मेह्नि पुष्यनक्षत्रादिना चंद्रमा युज्येत तदह्नि ऋतुमतीमुपोष्य तद्रात्रौ श्वेतपुष्प्या
बृहत्याः ( कंटकार्य्याः ) मूलमुत्थाप्योदकेन पिष्ट्वा दक्षिणस्यां नासिकायामासिंचति भर्ता ॥ तत्र मंत्रः ॥ ॐ
इयमोषधी त्रायमाणा सहमाना सरस्वती ॥ अस्याऽअहं बृहत्याः पुत्रः पितुरिव नाम जग्रभत् ॥ १ ॥ इति संस्का
रप्रकाशे गर्भाधानप्रयोगः ॥ ॥ अथ पुंसवनप्रयोगः ॥ ॥ तत्र गर्भाधानोत्तरं द्वितीये तृतीये मासि पुष्यपुनर्व
सुमृगशिरोहस्तमूलश्रवणान्यतमपुन्नक्षत्रयुक्तश्चंद्रः । तत्रोभयचंद्रतारानुकूलशुभेऽहनि गर्भिणीमुपवासं कारयित्वा

सं०१० शुचिः स्नातः कृताचमनो भर्ता आचम्य प्राणानायम्य देशकालौ संकीर्त्य अस्याः मम भार्यायाः उत्पत्स्यमान
१९ गर्भस्य बैजिकगार्भिकदोषपरिहारार्थं श्रीपरमेश्वरप्रीत्यर्थं पुंसवनं करिष्ये । इति संकल्प्य तत्र निर्विघ्नतार्थं गण
पतिपूजनं पुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं च करिष्ये । इति च संकल्प्य पूर्ववत्सर्वं संपाद्य पुण्याहवाच
नांते प्रजापतिः प्रीयतामिति वदेत् ॥ ततस्तां गर्भिणीं स्नापयित्वा अहते वाससी परिधाप्य रात्रौ न्यग्रोधाव
रोहाग्रपल्लवांश्च आचारात् कुशकंटकं सोमलताखंडं च शिशिरेण जलेन पिष्ट्वा पेषितोदकं वस्त्रगालितं कृत्वा
गर्भिण्या दक्षिणनासिकायामासिंचति भर्ता ॥ तत्र मंत्रौ ॥ ॐ हिर॒ण्य॒ग॒र्भः सम॑वर्त॒ताग्रे॑ भू॒तस्य॑ जा॒तः पति॑
कां० २ रेक॑ऽआसीत् ॥ स दा॑धार पृथि॒वीं द्यामु॒तेमां कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ १ ॥ ॐ अ॒द्भ्यः सम्भृ॑तः पृथि॒व्यै
रसा॑च्च वि॒श्वक॑र्म्मणः॒ सम॑वर्त्त॒ताग्रे॑ ॥ तस्य॒ त्वष्टा॑ वि॒दध॑द्रू॒पमे॑ति॒ तन्मर्त्य॑स्य दे॒व॒त्वमा॒जान॒मग्रे॑ ॥ २ ॥ स यदि
कामयेत वीर्यवान्स्यात्पुत्रस्तदा तस्याः स्त्रिया अंके उदकपूर्णं शरावं निधाय गर्भिण्या उदरमनामिकाग्रेण
स्पृशन् गर्भमभिमंत्रयते ॥ तत्र मंत्रः ॥ ॐ सु॒प॒र्णो॑सि ग॒रुत्माँ॑स्त्रि॒वृत्ते॒ शिरो॑ गाय॒त्रञ्चक्षु॑र्बृहद्रथंत॒रे प॒क्षौ ॥ स्तो

मंऽआत्मा च्छंदाᳬंस्यङ्गांनि यजूᳬंषि नामं ॥ सामंते तनूर्वांमदेव्यंयंज्ञा यज्ञियम्पुच्छन्धिष्ण्यांᳬशफाः ॥ सुप र्णोसि गुरुत्मान्दिवंङ्गच्छुस्वृः पत ॥ १ ॥ ततः कृतस्य कर्मणः सांगतासिद्ध्यर्थं दशसंख्याकान्ब्राह्मणान्भोज यिष्ये । इति संकल्प्य स्मृत्युक्तान्दशसंख्याकान्ब्राह्मणान्भोजयेत् ॥ इति पुंसवनसंस्कारप्रयोगः ॥ ॥ अथ सीमंतोन्नयनप्रयोगः ॥ ॥ तत्र प्रथमे गर्भे षष्ठेऽष्टमे वा मासे पुन्नक्षत्रे चंद्रतारानुकूलदिने पत्न्या सह मंगल स्नानं कृत्वा अहतवासोयुगालंकृतः शुचिर्दर्भपाणिः पत्न्या सह बहिः शालायां शुभासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य अस्याः मम भार्यायाः गर्भावयवेभ्यस्तेजोवृद्ध्यर्थं क्षेत्रगर्भयोः संस्कारार्थं प्रतिगर्भसमुद्भवैनोनिबर्हणेन बीजकोत्पत्त्यतिशयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सीमंतोन्नयनाख्यं संस्का रकर्म करिष्ये । तत्र निर्विघ्नतार्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं च करिष्ये । इति च संकल्प्य । गणपतिपूजनादिनांदीश्राद्धांतं सर्वं कुर्यात् ॥ 'अत्र पुण्याहवाचनांते धाता प्रीयतामिति ब्रूयात्' ततो बहिः शालायां हस्तमात्रपरिमितं चतुरस्रं स्थंडिलं कृत्वा कुशत्रयेण परिसमुह्य तान्कुशानैशान्यां निःक्षि

सं०१० प्य गोमयोदकेनोपलिप्य स्रुवमूलेन प्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्योल्लेखनक्रमेणानामिकाङ्गुष्ठा
२० भ्यां मृदमुद्धृत्यैशान्यां क्षिप्त्वा तं देशं जलेनाभिषिच्य कांस्यपात्रेणाग्निमुपसमाधाय "हुंफट्" इति मंत्रेण
क्रव्यादांशं नैर्ऋत्यां दिशि परित्यज्य ॥ ततोऽग्निंदूतमिति मंत्रेणात्माभिमुखं मंगलनामाग्निं स्थापयेत् । ततः
अग्न्यानीतपात्रे साक्षतोदकं निषिच्य आचार्योऽग्नेर्दक्षिणतः परिस्तरणभूमिं त्यक्त्वा ब्रह्मणे आसनं दत्त्वा तदु
परि प्रागग्रान्कुशानास्तीर्य ॥ ॐ अद्य कर्तव्यसीमंतोन्नयनहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्तुममुक
गोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलद्रव्यवासोभिर्ब्रह्मत्वेन त्वामहं वृणे इति ब्रह्माणं वृणुयात् । ॐ
कां० २ वृतोस्मीति प्रतिवचनम् ॥ ॐ यथाविहितं कर्म कुरु इति यजमानः । ॐ करवाणीति प्रतिवचनानंतरं ब्रह्माणम
ग्निप्रदक्षिणक्रमेणाऽनीय कल्पितासने उपवेशयेत् । ( तदभावे पंचाशत्कुशनिर्मितं वा स्थापयेत् ) ततः प्रणी
तापात्रं पुरतः कृत्वा जलेनापूर्य्य कुशत्रयेणाच्छाद्य ब्रह्मणो मुखमवलोक्य अग्नेरुत्तरतः कुशोपरि निदध्यात् ॥
ततः परिस्तरणम् ॥ बर्हिषश्चतुर्थभागमादाय चतुर्भिर्दर्भदलैरुत्तराग्रैः प्राच्याम् ॥ प्रागग्रैर्दक्षिणस्याम् ॥ उद

गग्रैः प्रतीच्याम् ॥ प्रागग्रैरुदीच्यां च परिस्तरणं कुर्य्यात् ॥ ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुश त्रयम् ॥ पवित्रकरणार्थं पवित्रे साग्रे अनंतगर्भे द्वे कुशपत्रे ॥ प्रोक्षणीपात्रम् ॥ आज्यस्थाली ॥ चरुस्थाली ॥ सम्मार्जनकुशाः पंच ॥ उपयमनकुशाः सप्त ॥ समिधस्तिस्रः पालाश्यः प्रादेशमात्राः ॥ स्रुवः खादिरो हस्त मात्रः ॥ आज्यं गव्यम् ॥ चर्वर्थास्तिलमुद्गतंडुलाः पृथक्पात्रस्थाः ॥ पूर्णपात्रम् ॥ दक्षिणा वरो वा ॥ एतानि पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयानि ॥ तदुत्तरतः मृदुपीठम् ॥ युग्मान्यौदुंबरफलानि एकस्त बकनिबद्धानि ॥ त्रयो दर्भपिंजूलाः ॥ त्र्येणी शललो ॥ वीरतरशंकुः ॥ शरेषीका ॥ आश्वत्थो वा शंकुः ॥ सूत्रक र्त्तनार्थं पूर्णं चात्रम् ॥ वीणागाथिनौ चेत्यासादयेत् ॥ ततः पवित्रच्छेदनैः पवित्रकरणं द्वयोः पवित्रयोरुपरि कुशत्रयं निधाय अग्रतः प्रादेशमात्रं विहाय त्रिभिः कुशैर्द्वे कुशतरुणे प्रच्छिद्य द्वयोर्मूलं त्रीणि चोत्तरतः क्षि पेत् ॥ ततः स पवित्रहस्तेन प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निक्षिप्य अनामिकांगुष्ठाभ्यामुत्तराग्रे गृहीत्वा त्रिरुत्प वनम् ॥ प्रोक्षणीपात्रस्य सव्यहस्तेन करणम् ॥ अनामिकाङ्गुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुर्द्दिंगनम् । ततः प्रणी

सं० प्र० तोदकेन प्रोक्षणीप्रोक्षणम् । प्रोक्षणीजलेन आज्यस्थाल्यादीनि पूर्णपात्रपर्यंतानि क्रमेणैकैकशः प्रोक्ष्य असंचरे
२१ प्रणीताग्न्योर्मध्ये प्रोक्षणीपात्रं निधाय । आसादितमाज्यम् आज्यस्थाल्यां प्रक्षिप्य । चरुस्थाल्यां प्रणीतोद
कमासिच्य । तत्र मुद्गान्प्रक्षिप्य अधिश्रित्य ईषच्छृतेषु मुद्गेषु तिलतंडुलप्रक्षेपं कृत्वा तत्र आज्यं ब्रह्माधिश्रय
ति । तदुत्तरतो होता चरुं युगपदग्नावारोप्य सिद्धे चरौ ज्वलदुल्मुकं प्रदक्षिणमाज्यचर्वोः समंताद् भ्रामयेत् ॥
ततो दक्षिणपाणिना स्रुवमादाय अधोमुखमग्नौ तापयित्वा सव्ये पाणौ कृत्वा दक्षिणेन सम्मार्जनाग्रैर्मूलतोग्रप
र्यंतं मूलैरग्रमारभ्य अधस्तान्मूलपर्यंतं संमृज्य प्रणीतोदकेनाभिषिच्य पुनः प्रतप्य दक्षिणतो निदध्यात् ॥ तत
कां० २ आज्यमुत्थाप्य चरोः पूर्वेण नीत्वाऽग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्य आज्यस्य पश्चिमतो नीत्वा आज्य
स्योत्तरतः स्थापयित्वा आज्यमग्नेः पश्चादानीय चरुं चानीय आज्यस्योत्तरतो निदध्यात् ॥ ततः पूर्ववत्पवित्रा
भ्यामाज्यमुत्पूय अवलोक्य तस्मादपद्रव्यनिरसनं पुनः प्रोक्षण्युत्पवनम् । ततः उपयमनकुशानादाय उत्तिष्ठन्
प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः प्रक्षिपेत् ॥ ततः । उपविश्य प्रोक्षण्युदकेन सप

वित्रेणाग्निमीशानादि उदकपर्यंतं परिषिच्य दक्षिणं जान्वाच्य ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ स्त्रुवेणाज्याहुतीर्जु
हुयात्। अनंतरं स्त्रुवावस्थितहुतशेषस्य घृतस्य प्रोक्षणीपात्रे प्रक्षेपः। अथ होमः॥ (अग्नेरुत्तरभागे) ॐ प्रजा
पतये स्वाहा। इदं प्रजापतये न मम॥ इति मनसा॥ (अग्नेर्दक्षिणभागे) ॐ इंद्राय स्वाहा। इदमिंद्राय न मम॥
इत्याघारौ (मध्ये समिद्धतमे) ॐ अग्नये स्वाहा। इदमग्नये न मम॥ ॐ सोमाय स्वाहा। इदं सोमाय न
मम॥ इत्याज्यभागौ॥ ततश्चरुमभिघार्य्य जुहुयात्॥ ॐ प्रजापतये स्वाहा। इदं प्रजापतये न मम॥ इति
हुत्वा स्थालीपाकेनोत्तरार्द्धात्स्विष्टकृत्॥ ॐ अग्नये स्विष्टकृते स्वाहा। इदमग्नये स्विष्टकृते न मम॥ (तत
आज्येन भूराद्या नवाहुतयः) ॐ भूः स्वाहा। इदमग्नये॥ ॐ भुवः स्वाहा। इदं वायवे॥ ॐ स्वः स्वाहा। इदं
सूर्याय॥ ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः॥ यजिष्ठो वह्नितमः शोशुचानो विश्वा
द्वेषांꣳसि प्रमुमुग्ध्यस्मत्स्वाहा। इदमग्नीवरुणाभ्याम्॥ १॥ ॐ स त्वन्नोऽअग्ने वमो भवोती नेदिष्ठोऽअस्या
उषसो व्युष्टौ॥ अवयक्ष्व नो वरुणꣳरराणो वीहि मृडीकꣳसुहवोनऽएधि स्वाहा। इदमग्नीवरुणाभ्याम्॥ २॥

सं०प्र० ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्त्वमया असि ॥ अया नो यज्ञं वहास्यया नो धेहि भेषजꣳ स्वाहा ।
२२ इदमग्नये॥३॥ ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः ॥ तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे
मुंचंतु मरुतः स्वर्काः स्वाहा । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च ॥ ४ ॥ ॐ उदु
त्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳ श्रथाय ॥ अथा वयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा ।
इदं वरुणायादित्यायादितये च ॥ ५ ॥ ॐ प्रजापतये स्वाहा । इदं प्रजापतये ॥ ततः संस्रवप्राशनम् आच
मनं च ॥ ब्रह्मणे पूर्णपात्रदानम् ॥ ॐ अद्य सीमंतोन्नयनहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थ
कां० २ मिदं पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणात्वेन तुभ्यमहं संप्रददे ॥ ॐ
स्वस्तीति प्रतिवचनम् ॥ ततो ब्रह्मग्रंथिविमोकः ॥ॐ सुमित्रिया नऽआपऽओषधयः सन्तु॥इति पवित्राभ्यां प्रणी
ताजलेन शिरः संमृज्य ॐ दुर्म्मित्रियास्तस्मै संतु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । इत्यैशान्यां प्रणीतान्युब्जी
करणम् ॥ पवित्रे अग्नौ प्रहरति । बर्हिः । उपयमनस्याप्यग्नौ प्रक्षेपः॥ततस्त्र्यायुषकरणम् । एवं होमशेषं समाप्य

ततः पश्चादग्नेर्भद्रपीठे मृद्वासनं संस्थाप्य तदुपरि गर्भिणीमुपवेशयेत् ॥ ततः ॥ औदुंबरेण युग्मफलवता अप क्कस्तबकेन अश्वत्थशंकुना त्रिभिश्च दर्भपिंजूलैस्त्र्येण्या शलल्या मूत्रकर्तनया च सूच्या इत्येतैरेकीकृतैः सीमंतं मूर्ध्नि विनयति ललाटांतरमारभ्य केशान्द्विधा करोति भर्ता । ॐ भूर्भुवः स्वर्विनयामीति मंत्रेण ॥ यद्वा । ॐ भूर्विनयामि ॥ १ ॥ ॐ भुवर्विनयामि ॥ २ ॥ ॐ स्वर्विनयामि ॥ ३ ॥ इति त्रिभिर्मंत्रैस्त्रिर्विनयति ॥ ततस्तत्सर्वं वेण्यां बध्नाति " ॐ अयमूर्जावतो वृक्षऽऊर्जीव फलिनी भव ॥ १ ॥" इति मंत्रेण ॥ अथ गाथागानम् ॥ वीणागाथिनौ प्रति राजानं संगायेतामिति प्रैषं दद्यात् ॥ यद्वा । सोमराजानं संगायेतामिति प्रैषः ॥ तौ च प्रेषितौ । "सोमऽएव नो राजेमा मानुषीः प्रजाः ॥ अविमुक्तचक्रऽआसीरंस्तीरे तुभ्यमसाविति ॥१॥ गाथां गायतः । असौ स्थाने समीपावस्थिताया गंगायमुनाप्रमुख्याया नद्याः प्रथमांतं नाम गृह्णाति । ( गंगा यमुना इति ) ततः सांगतासिद्ध्यर्थं स्मृत्युक्तान्दशसंख्याकान्ब्राह्मणान्भोजयित्वा तेभ्यश्च दक्षिणां दत्त्वा तैराशिषो गृह्णीयात् ॥ इति संस्कारप्रकाशे सीमंतोन्नयनसंस्कारप्रयोगः ॥

॥ अथ जातकर्मप्रयोगः ॥

॥ तत्रादौ शीघ्रप्रसवोपायः ॥

सं०१० ॐ हिमवत्युत्तरे पार्श्वे शबरीनाम यक्षिणी ॥ तस्या नूपुरशब्देन विशल्या स्यात्तु गर्भिणी स्वाहा ॥ १ ॥ इति
२३ मंत्रेणैकविंशतिदूर्वांकुरैरेकपलं तिलतैलं प्रदक्षिणमावर्तयन्नष्टशतं मंत्रं जपित्वा तत्तैलं किंचित्पाययेच्छेषमुदरे
लेपयेत् ॥ अथवा ॥ इदं यंत्रं प्रसूतिसमये पूर्वं सूतिकागृहे लेखनीयम् । एतद्दर्शनेन सुखेन शीघ्रं नार्यः प्रसवंति॥
अथ सोष्यंतीमिति प्रसवकाले शूलवतीं स्त्रियं भर्ता एजतु दशमास्यो गर्भ इति मंत्रेण दशकमभि–यंत्रं यथा।
मंत्र्य तेनोदकेन शीघ्रप्रसवार्थं त्रिवारमभिषिंचेत् ॥ॐ एजंतु दशमास्यो गर्भो जरायुणा सह ॥यथा
यँवायुरेजंति यथा समुद्रऽएजंति॥एवायन्दशमास्योऽअस्रञ्जरायुणा सह ॥ १० ॥ इत्यनेन मंत्रेण ॥
कां० २ अभ्युक्षणानन्तरमवरावपतननिःसारपर्यंतं प्रसूतिसमीपे 'अवैतु पृश्निशैवलम्' इति मंत्रं जपति
भर्ता ॥ मंत्रः ॥ ॐ अवैतु पृश्निः शैवलꣳशुने जराद्यत्तवे नैवमाꣳसेन पीवरी न कस्मिंश्चनायतनमवजरायु
पद्यताम् ॥ १ ॥ [ जातकर्म ॥ ] अथ कुमारे जाते नालच्छेदात्पूर्वं शीतेन एव वारिणा [ नोष्णवारिणा ] स्नात्वा
अहते वाससी परिधाय शुभासने उपविश्य आचम्य प्राणानायम्य देशकालौ स्मृत्वा ममास्य बालस्य गर्भां

| | | |
|---|---|---|
| ८ | १ | ६ |
| ३ | ५ | ७ |
| ४ | ९ | २ |

ङ्कुपानजनितसकलदोषनिबर्हणायुर्मेधाभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्म करिष्ये। इति संकल्प्य तदंगत्वेन गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं हेम्ना एव नांदीश्राद्धं च पूर्ववत्कुर्यात्॥ (अत्र पुण्याहवाचनांते सविता प्रीयतामिति वदेत्) ततोऽच्छिन्ने नाले मेधाजननायुष्ये करोति। तत्र मेधाजननं यथा॥ अनामिकया सुवर्णांतर्हितया मधुघृते मिश्रयित्वा घृतं वा केवलं कुमारं प्राशयति पिता। तत्र मंत्रः॥ ॐ भूस्त्वयि दधामि॥ ॐ भुवस्त्वयि दधामि॥ ॐ स्वस्त्वयि दधामि॥ ॐ भूर्भुवःस्वः सर्वं त्वयि दधामीत्यनेन मंत्रेण सकृत्प्राशयति॥ ॥ अथायुष्यं करोति॥ तत्र कुमारस्य नाभिदेशे वा दक्षिणकर्णसमीपे अग्निरायुष्मानित्यादिवक्ष्यमाणमंत्राञ्जपति॥ ॐ अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मांस्तेन त्वायुषायुष्मन्तं करोमि॥१॥ ॐ सोमऽआयुष्मान्त्सऽओषधीभिरायुष्मांस्तेन त्वायुषायुष्मन्तं करोमि॥२॥ ॐ ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वायुषायुष्मन्तं करोमि॥३॥ ॐ देवाऽआयुष्मन्तस्तेऽमृतैरायुष्मन्तस्तेन त्वायुषायुष्मन्तं करोमि॥४॥ ॐ ऋषयऽआयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वायुषायुष्मन्तं करोमि॥५॥ ॐ पितरऽआयुष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन

सं०प्र० त्वायुषायुष्मन्तं करोमि ॥ ६ ॥ ॐ युज्ञऽआयुष्मान्त्स दक्षिणाभिरायुष्माँस्तेन त्वायुषायुष्मन्तं करोमि ॥ ७ ॥
२४ ॐ समुद्रऽआयुष्माँत्स स्रवंतीभिरायुष्माँस्तेन त्वायुषायुष्मन्तं करोमि ॥ ८ ॥ इति त्रिर्जपति ॥ ॐ त्र्यायुषञ्ज
मदग्नेः कश्यपस्य त्र्यायुषम् ॥ यद्देवेषु त्र्यायुषं तन्नोऽअस्तु त्र्यायुषम् ॥ १ ॥ इति त्रिर्जपित्वा ॥ यदि पिता काम
येताऽयं कुमारः सर्वमायुरियादिति तदा कुमारमभिमृशेद्दिवस्परीत्यनुवाकेन ॥ ॐ दिवस्परि प्रथमञ्जज्ञेऽअग्नि
रस्मद्द्वितीयम्परि जातवेदाः ॥ तृतीयमप्सु नृमणाऽअजस्रमिन्धानऽएनञ्जरते स्वाधीः ॥ १ ॥ विद्मा तेऽअग्ने
त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा ॥ विद्माते नाम परमङ्गुहा यद्विद्मा तमुत्सं यतऽआजगन्थ ॥ २ ॥
कां० २ समुद्रे त्वा नृमणाऽअप्स्वन्तर्नृचक्षाऽईधे दिवोऽअग्नऽऊधन् ॥ तृतीये त्वा रजसि तस्थिवांसमपामुपस्थे महि
षा अवर्धन् ॥ ३ ॥ अक्रन्ददग्निस्तनयन्निव द्यौः क्षा_रेरिहद्वीरुधः समञ्जन् ॥ सद्यो यज्ञानो विहीमिद्धोऽअख्य
दारोदसी भानुना भात्यन्तः ॥ ४ ॥ श्रीणामुदारो धरुणो रयीणाम्मनीषाणाम्प्रार्पणः सोमगोपाः ॥ वसुः सूनुः
सहसोऽअप्सु राजा विभात्यग्रऽउषसामिधानः ॥ ५ ॥ विश्वस्य केतुर्भुवनस्य गर्भऽआरोदसीऽअपृणाज्जायमानः ॥

वीडुश्चिदद्रिमभिनत्परायञ्जना यदग्निमयंजन्त पञ्च ॥ ६ ॥ उशिक्पावको अरतिः सुमेधा मर्त्येष्वग्निरमृतो
निधायि ॥ इयर्ति धूममरुषम्भरिभ्रदुच्छुक्रेण शोचिषाद्यामिनक्षन् ॥ ७ ॥ दृशानो रुक्म ऽउर्व्याव्यद्यौद्दुर्मर्षमा
युः श्रिये रुचानः ॥ अग्निरमृतो ऽअभवद्वयोभिर्यदेनन्द्यौरजनयत्सुरेताः ॥ ८ ॥ यस्ते ऽअद्य कृणवद्भद्रशोचे
पूपन्देव घृतवन्तमग्ने ॥ प्रतन्नय प्रतरं वस्यो ऽअच्छाभिसुम्नन्देवभक्तं यविष्ठ ॥ ९ ॥ आतम्भज सौश्रवसेष्वग्न
ऽउक्थ ऽउक्थ आभज शस्यमाने ॥ प्रियः सूर्ये प्रियो ऽअग्नाभवात्युज्जातेन भिनददुज्जनित्वैः ॥ १० ॥ त्वामग्ने
यजमाना ऽअनुद्यून्विश्वावसु दधिरे वार्याणि ॥ त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो विवव्रुः ॥ ११ ॥

इति ॥ अथ कुमारस्य प्रागादिचतुर्दिक्षु चतुरो ब्राह्मणान् एकं मध्ये एवं पंच ब्राह्मणानवस्थाप्य इममनु
प्राणेति यजमानो ब्रूयात् । ततः पूर्वदिक्स्थितो ब्राह्मणः कुमारं लक्षीकृत्य प्राणेति ब्रूयात् ॥ एवं व्यानेति दक्षि
णतः अपानेत्यपरतः उदानेत्युत्तरतः समानेति पंचम उपरिष्टादवेक्षमाणो ब्रूयात् ॥ अविद्यमानेषु तु ब्राह्मणेषु
स्वयमेव प्रतिदिशं परिक्रम्यैतत्करोति ॥ स्वयं करणपक्षे प्रेषाभावः ॥ ततो यस्मिन्देशे कुमारो जातो भवति तं

सं०प्र० देशमभिमंत्रयते ॥ तत्र मंत्रः ॥ ॐ वेद ते भूमिहृदयन्दिवि चन्द्रमसि श्रितम् ॥ वेदाहन्तन्मान्तद्विद्यात्पश्येम
२५ शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम् ॥ १ ॥ अथैनं कुमारमभिमृशति ॥ ॐ अश्मा भव
परशुर्भव हिरण्यमस्रुतं भव ॥ आत्मा वै पुत्रनामासि त्वं जीव शरदः शतम् ॥ १ ॥ अथास्य मातरमभिमंत्र
यते ॥ ॐ इडासि मैत्रावरुणी वीरे वीरमजीजनथाः ॥ सा त्वं वीरवती भव यास्मान्वीरवतोऽकरत् ॥ १ ॥ अथा
स्य मातुर्दक्षिणस्तनं जलेन प्रक्षाल्य कुमाराय प्रयच्छति ॥ तत्र मंत्रः ॥ ॐ इमꣳस्तनमूर्जस्वन्तन्धयायां प्रपी
नमग्ने सरिरस्य मध्ये ॥ उत्सञ्जुषस्व मधुमन्तमर्वन्त्समुद्रियꣳसदनमाविशस्व ॥ १ ॥ ततो वामस्तनं प्रक्षाल्य
कां० २ प्रयच्छति ॥ ॐ यस्ते स्तनः शशयो योमयोभूर्यो रत्नधा वसुविद्यः सुदत्रः ॥ येन विश्वा पुष्यसि वार्याणि सर
स्वती तमिह धातवेकः ॥ १ ॥ इत्यनेन मंत्रेण ॥ ततः सूतिकायाः खट्वाधस्तात्कुमारस्य शिरःप्रदेशे उदकपूर्णं
कलशं निदधाति ॥ "ॐ आपो देवेषु जाग्रथ यथा देवेषु जाग्रथ ॥ एवमस्याꣳसूतिकायाꣳसपुत्रिकायां
जाग्रथ ॥ १ ॥" इति मंत्रेण ॥ तदुदकपात्रं यावत्सूतिकोत्थानं तावत्तिष्ठेत् ॥ ततो नालच्छेदनम् ॥ ततः सूतिका

गृहद्वारदेशे अरत्निमात्रे स्थंडिले पंचभूसंस्कारान्कृत्वाऽग्निं स्थापयेत् ॥ ततोऽग्नं सपूज्य हविः संस्कृत्य पर्युक्ष्य अतः प्रभृत्युत्थानं यावत्तावत्सायंप्रातः संधिवेलयोर्द्वयोः प्रत्यहं यावत्सूतिकास्नानं करोति तावद्दशाहपर्यंतं सूक्ष्मतंडुलाग्रमिश्रान्सर्षपान्पिता अन्यो वा ब्राह्मणस्तस्मिन्नग्नौ द्वेद्वे आहुती हस्तेन जुहोति ॥ तत्र मंत्रौ ॥ ॐ शंडामर्का उपवीरः शाडिकेयऽउलूखलः ॥ मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा । इदं शंडामर्काय उपवीराय शौंडिकेयाय उलूखलाय मलिम्लुचोद्रोणासश्च्यवनोनश्यतादितेभ्यश्च न मम ॥ १ ॥ ॐ आलिखन्ननिमिषः किंवदन्तऽउपश्रुतिः ॥ हर्य्यक्षः कुम्भीशत्रुः पात्रपाणिर्नृमणिर्हन्त्रीमुखः सर्षपारुणश्च्यवनोनश्यतादितः स्वाहा॥इदमालिखन्नानिमिषायर्तिकवद्भ्यःउपश्रुतहर्यक्षाय कुंभीशत्रुवे पात्रपाणये नृमणये हंत्रीमुखाय सर्षपारुणाय च्यवनाय च न मम ॥ २ ॥ इत्याहुतिद्वयं जुहुयात् ॥ ॥ अथ कुमाररक्षा ॥ ॥ यदि कुमारग्रहो बालमुपद्रवेत्तदा तं बालं जालेन प्रच्छाद्योत्तरीयेण वाससा वा प्रच्छाद्य अंके आदाय तं बालं हृदि स्पृशन्पिता जपति ॥ तत्र मंत्रः॥ॐ कूर्कुरः सुकूर्कुरः कूक्कुरो बालबंधनः ॥ चेच्चेच्छुनकः सृज नमस्तेऽअस्तु सीसरोलपेताप

सं०प्र० ह्वरतत्सत्यम् ॥ यत्ते देवा वरमददुः स त्त्वं कुमारमेव वावृणीथाः॥चेच्छेच्छुनकः सृज नमस्तेऽअस्तु सीसरो लपेता
२६ पह्वर तत्सत्यम् ॥ यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ ॥ चेच्छेच्छुनकः सृज नमस्तेऽअस्तु
सीसरो लपेतापह्वर तत्सत्यम् ॥ १ ॥ इत्यंतं पठितेन रक्षति ॥ ॐ न नामयति न रुदति न हृष्यति न ग्लायति
यत्र वयं वदामो यत्र चाभिमृशामसि ॥ १ ॥ इत्यनेन मंत्रेणाभिमृशति कुमारं पिता ॥ ततः कृतस्य कर्मणः
सांगतासिद्ध्यर्थं स्मृत्युक्तान्दशसंख्याकान्ब्राह्मणान्सूतकान्ते भोजयेत् ॥ इति संस्कारप्रकाशे जातकर्मसंस्का
रप्रयोगः ॥ ॥ अथ बालस्य दुष्टदृष्टिदोषादौ रक्षाविधानम् ॥ ॥ वासुदेवो जगन्नाथः पूतनातर्जनो हरिः ॥
कां० २ रक्षति त्वरितं बालं मुंचमुंच कुमारकम् ॥ १ ॥ कृष्ण रक्ष शिशुं शंखमधुकैटभमर्दन ॥ प्रातः संगवमध्याह्नसा
याह्नेषु च संध्ययोः ॥२॥ महानिशि सदा रक्ष कंसारिष्टनिषूदन ॥ यद्गोरजः पिशाचांश्च ग्रहान्मातृग्रहानपि ॥३॥
बालग्रहान्विशेषेण च्छिंधिच्छिंधि महाभयान् ॥ त्राहित्राहि हरे नित्यं त्वद्रक्षाभूषितं शिशुम् ॥ ४ ॥ इति भस्मा
भिमंत्र्यैव भूषयेत्तेन भस्मना ॥ शिशोर्ललाटाद्यंगेषु रक्षां कुर्याद्यथाविधि ॥ ५ ॥ इत्यंगरक्षा ॥ अथान्यप्रकारः ॥

रक्षरक्ष महादेव नीलग्रीव जटाधर ॥ ग्रहैस्तु सहितो रक्ष मुंचमुंच कुमारकम् ॥ १ ॥ अमुं मंत्रं भूर्जपत्रे विलिख्य तत्पत्रं दक्षिणभुजे बध्नीयात् ॥ इति ॥ अथ बालरोदनपरिहारार्थं यंत्रम् ॥ षडस्रमध्ये ह्रींकारस्तन्मध्ये शिशो र्नाम विलिख्य षट्कोणेषु ॐ लुलुव स्वाहा इति मंत्रषडक्षराणि विलिख्य तद्बहिर्नेमिवद्वृ–इदं यंत्रं लिखेत्। त्त्द्वयं विलिख्य तद्बहिरधोमुखैरर्धचंद्रैरावेष्ट्य पंचोपचारैः संपूज्य बालहस्ते बध्नीयात् ॥ ॥



अथ बालरक्षाविधायको बालग्रहस्तवः प्रयोगसारे ॥ प्रणम्य शिरसा शान्तं गणेशानंतमी श्वरम् ॥ बालग्रहस्तवं वक्ष्ये समस्ताभ्युदयप्रदम् ॥१॥ तपसा यशसा दीप्त्या वपुषा विक्रमेण च ॥ निर्दिष्टो यः सदा स्कंदः स नो देवः प्रसीदतु ॥२॥ रक्तमाल्यांबरधरो रक्तगंधानुलेपनः ॥ रक्तादित्योज्ज्वलः शान्तः स नो देवः प्रसीदतु ॥३॥ यो नंदनः पशुपतेर्मातॄणां पावकस्य च ॥ गंगोमाकृत्तिकानां च स नो देवः प्रसीदतु ॥४॥ देवसेनापरिवृतो देवसेनार्चितः सदा ॥ देवसेनापतिः श्रीमान्स नो देवः प्रसीदतु ॥ ५ ॥ शक्तिः शक्तिधरापूरः कुमारः शिखिवाहनः ॥ मुरारिहा महासेनः स नो० ॥ ६ ॥ प्रकृत्या सुंदरो दान्तो देवैश्वर्यो दयान्वितः ॥ नाना

सं०१० विनोदसंपन्नः स नो० ॥ ७ ॥ प्रबोधा सुप्रबोधा च बोधना सुप्रबोधना ॥ प्रबुद्धा च प्रबोधा च सुप्रीता सुमना
२७ स्तथा ॥ ८ ॥ मनोन्मनीति विख्याता योगिन्यः पान्तु बालकम् ॥ सुव्रता रुक्मिणी चैव मंदवेगा विभीषणा॥९॥
विद्युज्जिह्वा महानासा शतानंदा तथापरा ॥ बालदा प्रमदा चेति योगिन्यः पांतु बालकम् ॥ १० ॥ हरिणी चाथ
वाराही वानरी क्रोष्टुकी तथा ॥ कुबेरी कोटराक्षी च कुंभकर्णा च चूंडिनी ॥ ११ ॥ बलाद्दिकारिणी चेति यो
गिन्यः पांतु बालकम् ॥ शुद्धा विशुद्धा श्रद्धा च योगा सिद्धा मितंवदा ॥ १२ ॥ सुभगा शुभदा गौरी बला विक
रणीति च ॥ नानाविज्ञानविख्याता योगिन्यः पांतु बालकम् ॥ १३ ॥ लंबा प्रलंबा च तथा लंबकर्णा च लंबि
कां० २ का ॥ ज्वाला कराली कालिंदी कालिकेति यथोदिताः ॥ १४ ॥ स्वच्छंदाचारसंपन्ना योगिन्यः पांतु बालकम् ॥
प्रणीता सुप्रणीता च मालिनी विश्वमालिनी ॥ १५ ॥ विमला कमला माली लोला रौद्री च विश्वदा ॥ विचरंत्यो
यथाकामं योगिन्यः पांतु बालकम् ॥ १६ ॥ वायवेगा महावेगा सुवेगा वेगवाहिनी ॥ शशिनी हंसिनी हृष्टिः पुष्टिः
पौष्टिकसिद्धिदा ॥ १७ ॥ दिव्यानभावा वाहिन्यो योगिन्यः पांतु बालकम् ॥ भ्रमिणी भामिनी नित्या निर्भिन्ना

सुभगा गुहा ॥ १८ ॥ क्लेदिनी द्राविणीं वामा योगिन्यः पांतु बालकम् ॥ रुद्रशक्तिविनिष्क्रांतमेकाशीतिक्रमो
दितम् ॥ १९ ॥ योगिनीवृंदमेताद्धि सिद्धविद्याधरार्चितम् ॥ स्कंदग्रहाधिदैवं तद्बालकं पातु सर्वदा ॥ २० ॥ शकु
नी रेवती देवी शिखा च मुखमंडिका ॥ प्रलबा पूतनाख्या च कटपूतनिका पुनः ॥ २१ ॥ विजया गोमुखी धूम्रा
मुंडमाला तथापरा ॥ अधोलंबा च पद्मा च कुसुटाप्यथ चांबिका ॥ २२ ॥ भामिनी चैव काली च देवी प्रेतमुखी
तथा ॥ ऐंद्री मार्जारिका भूयः करुणी च शुभा कृशा ॥ २३ ॥ कालरात्रिश्च माया च लोहिता पिलिपिंचिका ॥
भीतारणी चक्रवादा भीषणा दुर्ज्जया परा ॥ २४ ॥ तापनी कटकोली च मक्तकेशी महास्वना ॥ अहंकारी जया
तद्वदजमेषा त्रिदंडिका ॥ २५ ॥ रोदिनी मुकुटाभिख्या ललाटा पिंगला तथा ॥ शीतला वालिनी चैव तापसी
पापराक्षसी ॥ २६ ॥ मानसाधनदा देवी बलानावर्त्तिनी तथा ॥ यमुना जातवेदा च मानिनी कलहंसिनी ॥ २७ ॥
बालिका देवदूती च वायसी यक्षिणी तथा ॥ स्वच्छंदा पालिका चैव वासिनी चांबिकेति च ॥ २८ ॥ पंचाशत्तु कुलो
त्पन्नाश्चतुष्षष्टिसमीरिताः ॥ योगिन्योनित्य संतुष्टाः स्कंदापस्मारदेवताः ॥ २९ ॥ नानारक्षाधिकारस्था बालकं

सं०प्र० पांतु सर्वदा ॥ महालक्ष्मीर्महातुंगा महासेना महाबला ॥३०॥ महाकंपा महाभीमा महातेजा महोत्सवा ॥ महा
२८ सेना महाचंडा मोहिनी वीरनायका ॥ ३१ ॥ एकवीरा विशालाक्षी सुकेशी सुमनास्तथा ॥ सुकेशिनी च संतुष्टा
दंडिनी च विलंबिनी ॥३२॥ भामिनी चाथ सौवर्णी सिंहवक्त्रा कटंकिनी ॥ भ्रमरा चंचला चंपा सिद्धिदा च तथा
परा ॥ ३३ ॥ शातोदरी धृतिः स्वाहा स्वधाख्या च सनातनी ॥ शंबरा च तथा देवी नीलग्रीवा तथांबिका ॥३४॥
वितला गंधिनी वामा क्रीडती चैव वाहिनी ॥ कर्षिणी मालती फुल्ला कालकर्णी च चंडिका ॥ ३५ ॥ चित्रानना
गुहा चेति पार्वती संगतिर्गता ॥ पंचाशद्वसम्पन्ना शकुनी दैवतप्रिया ॥ ३६ ॥ योगिन्यः कामरूपिण्यो बालकं
कां० २ पांतु सर्वदा ॥ विश्वंतपा प्रभावज्ञा सर्वज्ञा सर्वगा गुहा ॥ ३७ ॥ दुर्गा सरस्वती ज्येष्ठा श्रेष्ठा पद्मा परापरा ॥
प्रमदा रोहिणी सीता प्रह्वी प्रह्लादिनी विभा ॥ ३८ ॥ विभूतिर्विततिः प्रीतिः प्रकृतिः प्रमतिर्यथा ॥ एता भगवता
सृष्टा योगिन्यो योगसिद्धिदाः ॥३९॥ पंचविंशतिराख्याता रेवती शक्तिगोचरा ॥ जगदाप्यायनकरा बालकं पांतु
सर्वदा ॥ ४० ॥ नंदश्चैवोपनंदश्च गोमतिः सुमतिस्तथा ॥ विद्युज्जिह्वो महाकालः करालस्तिमिलोचनः॥४१॥ तेजा

होडाविरूपाक्षो गोमुखो वडवामुखः ॥ कालाननः करालश्च शंकुकर्णौ विभीषणः ॥ ४२ ॥ एते संक्रंदनोत्पन्ना वीराः षोडश राक्षसाः ॥ पूतना देवताजुष्टा बालकं पांतु सर्वदा ॥ ४३ ॥ वज्रिणी शक्तिनी चाढया दंडिनी खड्गि नी तथा ॥ पाशिनी ध्वजिनी देवी गदिनी शूलिनी परा ॥ ४४ ॥ पविनी चक्रिणी चेति सर्वाकारा भयप्रदाः ॥ एता दिङ्निर्मिता देव्यो योगिन्यो देवकीर्त्तिताः ॥ ४५ ॥ अधिभूतप्रधाना या पायात्सा शांतपूतना ॥ प्रसन्ना मातरः सर्वा बालकं पांतु सर्वदा ॥ ४६ ॥ अर्थको जलको भूमा उग्रः स्कंदश्च कीर्त्तितः ॥ वीरेशाः पितृभिः सृष्टा नैजमेषाधिदेवताः ॥ ४७ ॥ पंचशक्तिप्रधानास्ते बालकं पांतु सर्वदा ॥ आदित्या वसवो रुद्राः पितरो मरु तस्तथा॥४८॥मुनयो मनवः काला ग्रहयोगाः सनातनाः ॥ सिद्धाः साध्याश्च गंधर्वा देव्यश्चाप्सरसां वराः ॥४९॥ विद्याधरा महादैत्या बालकं पांतु सर्वदा ॥ सहजा योगजा चैव वीरजा मंत्रजा तथा॥५०॥ योगिन्यो योगवनिता नानाविभ्रमगोचराः ॥ भवानी नाम संतुष्टा बालकं पांतु सर्वदा ॥५१॥ भूर्लोके च भुवर्लोके स्वर्लोके याश्च मातरः॥ अधश्चोर्ध्वं च तिर्यक्च क्रीडंत्योऽनतंमूर्त्तयः ॥ ५२ ॥ प्रसन्नयोगसम्पन्ना दिव्यैश्वर्यसमान्विताः ॥ स्वच्छंदपदसं

सं० प्र० भूतैर्भैरवैः परिवारिताः ॥५३॥ रक्षंतु बालकं प्रीताः शांतिं नयंतु चेतसा ॥ दिव्यं स्तोत्रमिदं पुण्यं बालरक्षाधिका
२९ रकम् ॥५४॥ जपेत्संतानरक्षार्थं बालग्रहोपशांतिदम् ॥ इति बालग्रहस्तवः ॥ इति बालरक्षाविधानम् ॥ ॥ अथ
षष्ठीदेवीपूजनविधानम् ॥ ॥ तच्च पंचमे षष्ठे दिने वा पूर्वरात्रौ कार्यम् ॥ तत्र पिता देशकालौ संकीर्त्य अनयोः
सूतिकाबालकयोः आयुरारोग्याभिवृद्ध्यर्थं सकलारिष्टशांतिद्वारा श्रीपरमेश्वरप्रीत्यर्थं विघ्नेशस्य जन्मदानां
जीवंत्यपरनाम्न्याः षष्ठीदेव्याः शस्त्रगर्भाभगवत्याश्च यथामिलितोपचारः पूजनं करिष्ये ॥ इति संकल्प्य एत
त्प्रतिमाः पीठादौ वाक्षतपुंजेषु पूगीफलेषु निवेश्याः ॥ ॐ भूर्भुवः स्वः विघ्नेशजन्मदाषष्ठीदेवीजीवंतिकाभ्यो
कां० २ नमः ॥ इति नाममत्रेण सर्वासां पृथग्वा एकतंत्रेण षोडशोपचारैः पूजनं कृत्वा प्रार्थयेत् ॥ अथ प्रार्थना ॥
षष्ठीदेवि नमस्तुभ्यं सूतिकागृहशालिनी ॥ पूजिता परया भक्त्या दीर्घमायुः प्रयच्छ मे ॥ १ ॥ जननी जन्मसौ
ख्यानां वर्द्धिनी धनसपदाम् ॥ साधिनी सर्वभूतानां जन्मदे त्वां नता वयम् ॥ २ ॥ गौरीपुत्रो यथा स्कंदः शिशु
त्वे रक्षितः पुरा ॥ तथा ममाप्यमुं बालं षष्ठिके रक्ष ते नमः ॥ ३ ॥ यथा दाशरथी रामश्चतुर्मूर्तिर्भवप्रदे ॥ त्वया

संरक्षितस्तद्वद्वालं पाहि शुभप्रभे ॥ ४ ॥ विष्णुनाभिस्थितो ब्रह्मा दैत्येभ्यो रक्षितस्त्वया ॥ तथा मे बालकं रक्ष योगनिद्रे नमोऽस्तु ते ॥ ५ ॥ रक्षितौ पूतनादिभ्यो नंदगोपसुतौ यथा ॥ ॥ तथा म बालकं पाहि दुर्गे देवि नमोऽस्तु ते ॥ ६ ॥ यथा वृत्रासुरादिंद्रो रक्षितोऽदितिबालकः ॥ त्वया तथा मे बालोऽयं रक्षणीयो महेश्वरि ॥७॥ यथा त्वयांजनीपुत्रो हनुमान्रक्षितः शिशुः ॥ तथा मे बालकं रक्ष दुर्गे दुर्गार्तिहारिणि ॥ ८ ॥ रुद्रस्वर्गाद्यथा देवि कश्यपादिसुतास्त्वया ॥ मातस्त्राहि तथा बालं विष्णुमाये नमोऽस्तु ते ॥ ९ ॥ सर्वविघ्नानपाकृत्य सर्वसौख्यप्रदायिनि ॥ जीवंतिके जगन्मातः पाहि नः परमेश्वरि ॥ १० ॥ अनया पूजया विघ्नेशजन्मदा जीवंत्यपरनाम्नी षष्ठी देवी शस्त्रगर्भा भगवत्यः प्रीयंताम् ॥ ॥ ततो दिक्पालपूजनम् । ततो नीराजनम् ॥ सूतिकागृहे बलिं सोपस्करं दद्यात् ॥ तत्र मंत्रः ॥ क्षेत्रस्याधिपते देवि सर्वारिष्टविनाशिनि ॥ बलिं गृहाण मे रक्ष क्षेत्रं सूतीं च बालकम् ॥ १ ॥ इमं सोपस्करबलिं क्षेत्राधिपत्यै देव्यै समर्पयामि ॥ इति बलिं दद्यात् ॥ तत आगत्य द्वारस्योभयतः कज्जलेन द्वेद्वे मातरौ लिखेत् ॥ तन्नामानि ॥ धिषणा १ वृद्धिमाता २ च तथा गौरी च १ पूतना २ ॥ आयुर्दात्र्यो भवंत्वे

सं०प्र० ता अद्य बालस्य मे शिवाः ॥ १ ॥ ततो नाममंत्रेण पंचोपचारैः पूजयेत् ॥ ततः सुवासिनीभोजनम् ॥ विप्रेभ्यश्च
३० खाद्यतांबूलदक्षिणादि दद्यात् ॥ तैराशिषो गृहीत्वा दशमेऽह्नि विसर्जनं कार्यम् ॥ अत्र पंचमषष्ठदिनयोः पुरुषाः
शस्त्रहस्ताः स्त्रियश्च नृत्यगीतकारिण्यः अस्यां रात्रौ जागरणं कुर्युः ॥ सूतिकागेहं सधूपाग्निदीपं शस्त्रमुसलांबु
विभूतियुतं कार्यम् ॥ सर्षपांश्च सर्वतो विकिरेत् ॥ अन्यदपि यथाचारं कार्यम् । विप्राश्च शांतिपाठं पठेयुः ॥ इति
षष्ठीपूजनम् ॥ ॥ अथ नामकरणसंस्कारप्रयोगः ॥ सूतकांते सूतिकामुत्थाप्य सुमुहूर्त्ते संस्नाप्य । कुमारपिता
मंगलं स्नात्वा अहतवाससी परिधाय धृतमंगलतिलकः शुभासने प्राङ्मुख उपविश्य आचम्य देशकालौ संकी
कां० २ र्त्य अस्य शिशोः बीजगर्भसमुद्भवैनोनिबर्हणायुरभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नामकरणं करिष्ये ॥ इति
संकल्प्य पूर्ववत् गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं च कुर्य्यात् ॥ ततो नामकरणे अधिका
रार्थं त्रीन्ब्राह्मणान्भोजयित्वा कुमारं संस्नाप्य अहतवासः परिधाप्य ब्राह्मणानुज्ञातो दक्षिणतः मातुरुत्संगस्थ
स्य शिशोर्दक्षिणकर्णे कथयति पिता ॥ अमुकशर्मासीति त्रिः श्रावयेत् ॥ द्व्यक्षरं वा चतुरक्षरं सुखोद्यं शर्मांतं

ब्राह्मणस्य वर्मांतं क्षत्रियस्य गुप्तांतं वैश्यस्य दासांतं शूद्रस्य नाम कुर्यात्॥कन्यायास्तु विषमाक्षरयुतम् । यशोदा । पार्वती । इत्यादि नाम कृत्वा दशसंख्याकान्ब्राह्मणान्भोजयित्वा तेभ्यश्च दक्षिणां दत्त्वा तैराशिषो गृहीत्वा देवताविसर्जनं कुर्यात् ॥ इति संस्कारप्रकाशे नामकर्मसंस्कारप्रयोगः ॥ ॥ अथ निष्क्रमणसंस्कारः ॥ ॥ चतुर्थे मासि चंद्रतारानुकूलदिने स्नात्वा आचम्य प्राणानायम्य देशकालौ स्मृत्वा अस्य कुमारस्य आयुरभिवृद्धिव्यवहारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गृहान्निष्क्रमणं करिष्ये ॥ इति संकल्प्य तदंगत्वेन मातृपूजाभ्युदयिके विधाय मात्रा अंके कृतं कुमारं सुशकुने गृहाद्बहिरानीय शिशोः सूर्यस्य उदीक्षणं पिता कारयति ॥ तत्र मंत्रः ॥ ॐ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् ॥पश्येम शरदः शतञ्जीवेम शरदः शतᳪ शृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् ॥ १ ॥ ततः स्मृत्युक्तान्दश ब्राह्मणान्भोजयेत् ॥ इति संस्कारप्रकाशे निष्क्रमणप्रयोगः समाप्तः ॥ ॥ अथान्नप्राशनम् ॥ ॥ कुमारस्य षष्ठे मासे चंद्रतारानुकूले शुभे दिने पिता सभार्यः शिशुना सह मंगलं स्नात्वाऽहते वाससी परिधाय आचम्य प्राणानायम्य देशका

लौ स्मृत्वा अस्य शिशोर्मातृगर्भमंगलप्राशनशुद्ध्यर्थमन्नाद्यब्रह्मवर्चसतेजइंद्रियायुर्बललक्षणफलसिद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थमन्नप्राशनाख्यं कर्म करिष्ये । तदंगत्वेन गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं च करिष्ये ॥ इति संकल्प्य पूर्ववन्नांदीश्राद्धांतं कर्म कुर्यात् ॥ पुण्याहवाचनांते सविता प्रीयतामिति वदेत् ॥ ततो हस्तमात्रं चतुरस्रं स्थंडिलं कुशैः परिसमुह्य तानैशान्यां निःक्षिप्य गोमयोदकेनोपलिप्य स्रुवेण प्रादेशमात्रमुत्तरोत्तरक्रमेण प्रागग्रं त्रिरुल्लिख्य उल्लेखनक्रमेणानामिकांगुष्ठाभ्यां मृदं समुद्धृत्य वारिणा तं देशमभ्युक्ष्य कांस्यपात्रस्थं वह्निं स्वपुरतो धृत्वा क्रव्यादांशं नैर्ऋत्यां दिशि किंचिन्निक्षिप्य स्थंडिले शुचिनामानमग्निं प्रतिष्ठाप्य षोडशोपचारैः संपूजयेत् ॥ ततः पुष्पचंदनतांबूलवस्त्राण्यादाय ॐ अद्य कर्तव्यान्नप्राशनहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्त्तुं तथा च होतृत्वकर्म्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेन होतृत्वेन च त्वामहं वृणे । इति वृत्वा ॐ वृतोस्मीति प्रतिवचनम् ॥ यथाविहितं कर्म कुरु इति यजमानः ॥ करवाणीति प्रतिवचनम् ॥ ततोऽग्नेर्दक्षिणतः शुद्धमासनं

निधाय तदुपरि प्रागग्रान्कुशानास्तीर्य्य अग्निं प्रदक्षिणं कारयित्वा ब्रह्माणमुदङ्मुखं तत्रोपवेश्य अस्मिन्नन्नप्राशनहोमकर्मणि त्वं मे ब्रह्मा भव इत्यभिधाय स्थापयेत् ॥ ॐ भवामीति प्रतिवचनम् ॥ ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतो निदध्यात् ॥ ततः परिस्तरणम् ॥ बर्हिषश्चतुर्थभागमादाय चतुर्भिः कुशपत्रैरुदगग्रैः प्राच्याम् १ पूर्वाग्रैर्दक्षिणस्याम् २ उदगग्रैः प्रतीच्याम् ३ पूर्वाग्रैश्चोदीच्याम् ४ परिस्तरणं कुर्यात् ॥ ततोऽग्नेरुत्तरतःपश्चिमादिशि पवित्रच्छेदनार्थं कुशत्रयम् ३ पवित्रकरणार्थं साग्रमनंतर्गर्भंकुशपत्रद्वयम् २ प्रोक्षणीपात्रम् १ आज्यस्थाली १ चरुस्थाली १ सम्मार्जनकुशाः पंच ५ उपयमनकुशाः सप्त ७ प्रादेशमितपलाशसमिधस्तिस्रः ३ स्रुवः १ आज्यम् । षट्पंचाशदुत्तरयजमानमुष्टिशतद्व्यावच्छिन्नतंडुलपूर्णपात्रम् १ चर्वर्थास्तंडुलाः । एतानि पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयानि ॥ ततः पवित्रच्छेदनकुशैर्यजमानप्रादेशमितपवित्रच्छेदनम् । सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय द्वाभ्यामनामिकांगुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्पवनम् । ततः प्रोक्षणीपात्रं सव्यहस्ते गृहीत्वा दक्षिणाना

सं०प्र० मिकांगुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुद्दिंगनम् । प्रणीतोदकेन प्रोक्षणीपात्रमभ्युक्ष्य प्रोक्षणीजलेनासादितवस्तुसेच
३२ नम् । अग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् ॥ ततः आज्यस्थाल्यामाज्यं निरूप्य प्रणीतोदकेन तंडुला
न्प्रक्षाल्य चरुपात्रे प्रणीतोदकं दत्त्वा तत्र तंडुलान्प्रक्षिप्य स्वयं चरुं गृहीत्वा ब्रह्मा चाज्यं वह्नावुत्तरश्चरुं दक्षि
णतः आज्यं निदध्यात् ॥ ततः सिद्धे चरौ तृणादि प्रज्वाल्य उभयोरुपरि प्रदक्षिणं भ्रामयित्वा वह्नौ तत्प्रक्षेपः॥
ततस्त्रिः स्रुवप्रतपनं कृत्वा संमार्जनकुशानामग्रैरन्तरतो मूलैर्बाह्यतः स्रुवं संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिः
प्रतप्य दक्षिणतो निदध्यात् ॥ तत आज्यमग्नितश्चरोः पूर्वेणानीयाऽग्रे धृत्वा आज्यपश्चिमेन चरुमानीय आज्य
कां० २ स्योत्तरतो निधानम् ॥ तत आज्यस्य प्रोक्षणीवत्त्रिरुत्पवनम् । अवेक्ष्य सत्यपद्रव्ये तन्निरसनम् ॥ ततः प्रोक्षण्यु
त्पवनम् ॥ तत उत्थाय उपयमनकुशान्वामहस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिध
स्तिस्रः प्रक्षिपेत् ॥ तत उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य प्रणीतापात्रे पवित्रे निधाय
ब्रह्मणान्वारब्धः पातितदक्षिणजानुः समिद्धतमेऽग्नौ जुहुयात् ॥ आहुत्यनंतरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणी

पात्रे प्रक्षेपः ॥ अथ होमः ॥ ॐ प्रजापतये स्वाहा इदं प्रजापतये ॥ १ ॥ [ इति मनसा ] ॐ इंद्राय स्वाहा । इदमिंद्राय ॥ २ ॥ [ इत्याघारौ ] ॐ अग्नये स्वाहा । इदमग्नये ॥ ३ ॥ ॐ सोमाय स्वाहा । इदं सोमाय ॥ ४ ॥ [ इत्याज्यभागौ ] ततोऽनन्वारब्धेनासाधारणाज्याहुतिद्वयम् ॥ तत्र मंत्रौ ॥ ॐ देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदंति ॥ सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहा । इदं वाचे० ॥ १ ॥ ॐ देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ॥ सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहा ॥ ॐ वाजो नाऽअद्य प्रसुवाति दानं वाजो देवाँ२ऽऋतुभिः कल्पयाति ॥ वाजो हि मा सर्ववीरं जजान विश्वाऽआशा वाजपतिर्जयेयउं स्वाहा ॥ २ ॥ इदं वाचे वाजाय ॥ ततः स्थालीपाकेनाहुतिचतुष्टयम् ॥ ॐ प्राणेनान्नमशीय स्वाहा । इदं प्राणाय ॥ १ ॥ ॐ अपानेन गंधानशीय स्वाहा । इदमपानाय ॥ २ ॥ ॐ चक्षुषा रूपाण्यशीय स्वाहा । इदं चक्षुषे ॥ ३ ॥ ॐ श्रोत्रेण यशोऽशीय स्वाहा । इदं श्रोत्राय ॥ ४ ॥ ततो ब्रह्मणान्वारब्धः स्थालीपाकेन ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते ॥ तत आज्येन ॐ भूः स्वाहा । इदं भूः ॥ १ ॥

सं०प्र० ॐ भुवः स्वाहा । इदं भुवः ॥ २ ॥ ॐ स्वः स्वाहा । इदं स्वः ॥ ३ ॥ [ एता महाव्याहृतयः ॥ ] ॐ त्वन्नोऽअग्ने
३३ वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्म
त्स्वाहा ॥ १ ॥ इदमग्नीवरुणाभ्याम् ॥ ॐ स त्वन्नोऽअग्नेवमो भवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ ॥ अवयक्ष्व
नो वरुणꣳरराणो वीहि मृडीकꣳसुहवो नऽएधि स्वाहा ॥ २ ॥ इदमग्नीवरुणाभ्याम् ॥ ॐ अयाश्चाग्नेस्यनभिश
स्तिपाश्च सत्यमित्त्वमया असि । अयानो यज्ञं वहास्ययानो धेहि भेषजꣳस्वाहा ॥ ३ ॥ इदमग्नये ॥ ॐ ये ते
शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्व
कां० २ र्काः स्वाहा ॥ ४ ॥ इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च ॥ ॐ उदुत्तमं वरुण पाश
मस्मदवाधमं विमध्यमꣳश्रथाय । अथा वयमादित्य व्रते तवानागसोऽअदितये स्याम स्वाहा ॥ ५ ॥ इदं वरुणा
य ॥ इति सर्वप्रायश्चित्तहोमः ॥ ॐ प्रजापतये स्वाहा । इदं प्रजापतये ॥ [ इति प्राजापत्यम्मनसा ] ततः संस्र
वप्राशनम् आचमनं च ॥ ब्रह्मणे पूर्णपात्रदानम् ॥ ॐ अद्य कृतैतदन्नप्राशनहोमकर्मणि कृताकृतावेक्षणरूपब्रह्म

कर्म्मप्रतिष्ठार्थमिदं पूर्णपात्र प्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणां तुभ्यमहं संप्रददे। इतिदद्यात्॥ॐस्वस्तीति प्रतिवचनम्॥ ब्रह्मग्रंथिविमोकः॥ॐसुमित्रिया नऽआप ओषधयः संतु॥ इति पठित्वा पवित्राभ्यां प्रणीताजलेन यजमानशिरः संमृज्य। ॐ दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः॥ इत्यैशान्यां प्रणीतान्युब्जीकरणम्। ततः स्तरणक्रमेण बर्हिरुत्थाप्याज्येनाभिघार्य हस्तेनैव जुहुयात्॥ ॐ देवां गातुविदो गातुं वित्वागातुमित॥ मनसस्पत इमं देवयज्ञᳪस्वाहावातेधाः स्वाहा ॥ इति बर्हिर्होमः॥ ततस्त्र्यायुषकरणम्॥ एवं होमशेषं समाप्य ततः स्थाल्यामासादितसर्वरसाञ्छाल्यादीन्यन्नानि च आनीय एकस्मिन्पात्रे प्रत्येकमुद्धृत्य सकृदेव प्राशयेत्तूष्णीं वा ॐ हन्त इति॥ अथ वा॥ ॐ अन्नपतेन्नस्य नो देह्यनमीवस्यं शुष्मिणः॥ प्र प्रदातारन्तारिषऽऊर्ज्जन्नो धेहि दिपदे चतुष्पदे॥ १॥ इति मंत्रेण प्राशनीयम्॥ ततो बालकं भूमौ उपवेश्य तदग्रे पुस्तकशस्त्रवस्त्रादिशिल्पं विन्यस्य जीविकापरीक्षां कुर्यात॥ शिशुस्स्वेच्छया प्रथमं यत्स्पृशेत्तेनैव तस्य जीविका भविष्यतीति ज्ञापयेत॥ ततो ब्राह्मणेभ्यो दक्षिणां दत्त्वा स्मृत्युक्तान्दश ब्राह्मणा

सं०१० न्भोजयेत् ॥ इति संस्कारप्रकाशे अन्नप्राशनसंस्कारप्रयोगः ॥ ॥ अथ शौनकोक्तदत्तपुत्रप्रतिग्रहविधान
२४- प्रयोगः ॥ ॥ चंद्रताराादिबलान्विते शुभमुहूर्त्ते सपत्नीको यजमानः शुभासने उपविश्य आचम्य प्राणानायम्य
देशकालौ स्मृत्वा मम अप्रजस्त्वप्रयुक्तपैत्रिकऋणापाकरणपुन्नामनरकत्राणद्वारा वंशाभिवृद्ध्यर्थं संततिविच्छेद
जनितप्रत्यवायपरिहारार्थं सनातनकुलधर्माणामुत्पत्तये च समस्तपितृणां शाश्वतब्रह्मलोकनिवासार्थं स्वस्योद्धर्तु
कामोऽहं स्वकुलोत्पन्नपुत्रवता समत्वसिद्ध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं शौनकोक्तविधिना पुत्रप्रतिग्रहं करिष्ये। तदं
गत्वेन गणपतिपूजनं स्वस्तिपुण्याहवाचनमाचार्यवरणं विष्णुपूजनं च करिष्ये ॥ इति संकल्प्य पूर्ववत्सर्वं कुर्या
कां० २ त् ॥ ततः स्थंडिले पंचभूसंस्कारपूर्वकं लौकिकाग्निं प्रतिष्ठाप्य तत आचार्येण सह दातुः समक्षं गच्छेत् ॥ आ
चार्यद्वारा यांचां कारयेत्। आचार्यो दातारं प्रत्येतस्मै पुत्रं देहीति यांचां कुर्यात्। ददामीति दाता वदेत् ॥
ततो दाता आचम्य प्राणानायम्य देशकालौ संकीर्त्य तव वंशाभिवृद्धये मम च पुत्रफलप्राप्तिकामःश्रीपरमेश्वरप्री
त्यर्थं पुत्रदानं करिष्ये। तदंगत्वेन गणपतिपूजनं करिष्ये ॥ इति संकल्प्य गणपतिपूजनांते प्रतिग्रहीतारं यथा

शक्त्या संपूज्य दानं दद्यात् ॥ तत्र मंत्राः ॥ ॐ ये यज्ञेन दक्षिणया समक्ता इंद्रस्य सख्यममृतत्वमानश ॥
तेभ्यो भद्रमंगिरसो वोऽअस्तु प्रतिगृभ्णीत मानवं सुमेधसः ॥ १ ॥ यऽउदाजन्पितरो गोमयं वस्वृते नाभिन्द
न्परिवत्सरे वलम् ॥ दीर्घायुत्वमंगिरसो वोऽअस्तु प्रतिगृभ्णीत मानवं सुमेधसः ॥ २ ॥ य ऋतेन सूर्यमारोहय
न्दिव्यप्रथयन्पृथिवीं मातरं वि ॥ सुप्रजास्त्वमंगिरसो वोऽअस्तु प्रतिगृभ्णीत मानवं सुमेधसः ॥ ३ ॥ अयन्नाभा
वदति वल्गुवो गृहे देवपुत्राऽऋषयस्तच्छृणोत न ॥ सुब्रह्मण्यमंगिरसो वोऽअस्तु प्रतिगृभ्णीत मानवं सुमेध
सः ॥ ४ ॥ विरूपासऽइदृषयस्तऽइद्गंभीरवेपसः ॥ तेऽअंगिरसः सूनवस्तेऽअग्नेः परिजज्ञिरे ॥ ५ ॥ इति पंचमंत्रा
न्पठित्वा देशकालौ संकीर्त्य इमं पुत्रं तव पैतृकऋणापाकरणपुन्नामनरकोत्तारणार्थं वंशाभिवृद्ध्यर्थमात्मनश्च
मुक्तये श्रीपरमेश्वरप्रीतये तुभ्यमहं संप्रददे न मम ॥ इति संकल्पोदकं प्रतिग्रहीतृहस्ते निषिंचेत् ॥ ततो ग्रही
ता "धर्माय त्वा गृह्णामि संतत्यै त्वा गृह्णामि" इति पठित्वा । "ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यांपू
ष्णो हस्ताभ्यां प्रतिगृह्णामि" इति हस्तद्वयेन प्रतिगृह्य स्वांके उपवेशयेत् ॥ ततः अंगादंगादिति मंत्रेण शिशुं

सं०प्र० मूर्ध्न्यभिजिघ्रेत् ॥ ॐ अंगादंगात्संभवासि हृदयादधिजायसे ॥ आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥ १ ॥
३५ ततो युवा सुवासा इति मंत्रेण बालकाय वस्त्रं परिधाय उष्णीषं बद्ध्वा कुंडलादिभिरलंकृत्य कुंकुमादिना तिलकं
कृत्वा प्रावरणेन संवेष्ट्य धृतच्छत्रं गीतवाद्यनृत्यमंगलपुरःसरं ब्राह्मणैः स्वस्तिन इंद्रेति सुमंगलसूक्तं पठद्भिर्नरैस्तं
बालं गृहे आनीय पुरंध्रीभिर्नीराजयेत् ॥ ततो ग्रहीता हस्तौ पादौ प्रक्षाल्य अग्नेः पश्चिमतः शुभासने प्राङ्मु
ख उपविश्य स्वदक्षिणतः पत्नीं चोपवेश्य पत्न्युत्संगे बालं चोपवेश्य आचम्य प्राणानायम्य देशकालौ स्मृत्वा
दत्तविधानांगहवनं करिष्ये ॥ इति संकल्प्य कुशकण्डिकां कुर्यात् ॥ तत्र आचार्योऽग्नेर्दक्षिणतः परिस्तरणभूमिं
कां० २ त्यक्त्वा ब्रह्मणे आसनं दत्त्वा तदुपरि प्रागग्रान्कुशानास्तीर्य ॐ अद्य कर्तव्यदत्तपुत्रविधानांगहोमकर्मणि
कृताकृतावेक्षणरूपब्रह्मकर्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलद्रव्यवासोभिर्ब्रह्मत्वेन त्वा
महं वृणे। इति वृत्वा ॥ ॐ वृतोस्मीति प्रतिवचनानंतरम्। ॐ यथाविहितं कर्म कुरु। इति यजमानाभिहिते।
ॐ करवाणीति प्रतिवचनं दद्यात् ॥ ततो ब्रह्माणमग्निप्रदक्षिणक्रमेणानीय कल्पितासने उपवेशयेत् ॥ [तदभावे

पंचाशत्कुशनिर्मितं वा स्थापयेत् । ] ततः प्रणीतापात्रं पुरतः कृत्वा जलेनापूर्य्य कुशत्रयेणाच्छाद्य ब्रह्मणो मुखमवलोक्य अग्नेरुत्तरतः कुशोपरि निदध्यात् ॥ ततः परिस्तरणम् ॥ बर्हिषश्चतुर्थभागमादाय चतुर्भिर्दर्भदलै रुत्तराग्रैराग्नेयादीशानांतम् १ प्रागग्रैर्नैर्ऋत्यादाग्नेयांतम् २ उदगग्रैर्नैर्ऋत्याद्वायव्यांतम् ३ प्रागग्रैर्वायव्यादीशानांतं च परिस्तरेत् ४ ॥ एवं परिस्तरणं कृत्वा अग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयम् ३ पवित्रकरणार्थं पवित्रे साग्रे अनंतर्गर्भे द्वे कुशपत्रे २ प्रोक्षणीपात्रम् १ आज्यस्थाली १ चरुस्थाली १ संमार्जनकुशाः पंच ५ उपयमनकुशाः सप्त ७ समिधस्तिस्रः पालाश्यः प्रादेशमात्राः ३ स्रुवः १ आज्यं गव्यम् । चर्वर्थास्तंडुलाः । तंडुलपूरितपूर्णपात्रम् १ दक्षिणा । एतानि पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयानि ॥ ततः पवित्रच्छेदनैः पवित्रकरणम् ॥ द्वयोः पवित्रयोरुपरि कुशत्रयं निधाय अग्रतः प्रादेशमात्रं विहाय त्रिभिः कुशैर्द्वे कुशतरुणे प्रच्छिद्य द्वयोर्मूलं त्रीणि चोत्तरतः क्षिपेत् ॥ ततः सपवित्रहस्तेन प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निक्षिप्य अनामिकांगुष्ठाभ्यामुत्तराग्रे गृहीत्वा त्रिरुत्पवनम् । प्रोक्षणीपात्रस्य सव्यहस्ते करणम् । अनामिकांगुष्ठाभ्यां

सं०प्र० पवित्रे गृहीत्वा त्रिरुर्ध्वगनम् । ततः प्रणीतोदकेन प्रोक्षणीप्रोक्षणम् । प्रोक्षणीजलेन आज्यस्थाल्यादीनि पूर्णपा
३६ त्रपर्यंतानि क्रमेणैकैकशः प्रोक्ष्य असंचरे प्रणीताग्न्योर्मध्ये प्रोक्षणीपात्रं निधाय आसादितमाज्यमाज्यस्थाल्यां
प्रक्षिप्य । चरुस्थाल्यां प्रणीतोदकमासिच्य । तत्र तंडुलान्प्रक्षिप्याज्यं ब्रह्माधिश्रयति । तदुत्तरतः स्वयं चरुमेव
युगपदग्नावारोप्य । ईषच्छृते चरौ ज्वलदुल्मकं प्रदक्षिणमाज्यचर्वोः समंतादभ्रामयेत् ॥ ततो दक्षिणपाणिना
स्रुवमादाय अधोमुखमग्नौ तापयित्वा सव्ये पाणौ कृत्वा दक्षिणेन सम्मार्जनाग्रैर्मूलतोग्रपर्यंतं मूलेरग्रमारभ्य
अधस्तान्मूलपर्यंतं संमृज्य प्रणीतोदकेनाभिषिच्य पुनः प्रताप्य दक्षिणतो निदध्यात् ॥ ततः आज्यमुत्थाप्य
कां० २ चरोः पूर्वेण नीत्वाग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्य आज्यस्य पश्चिमतो नीत्वा आज्यस्योत्तरतः स्थापयि
त्वा आज्यमग्नेः पश्चादानीय चरुं चानीय आज्यस्योत्तरतो निदध्यात् ॥ ततः पवित्राभ्यामाज्यमुत्पूय अवलो
क्य तस्मादपद्रव्यनिरसनं पुनः प्रोक्षण्युत्पवनम् ॥ ततः उपयमनकुशानादाय उत्तिष्ठन् प्रजापतिं मनसा ध्या
त्वा तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः प्रक्षिपेत् ॥ तत उपविश्य प्रोक्षण्युदकेन सपवित्रेणाग्निमीशानादिउद

कपर्यंतं परिषिच्य दक्षिणं जान्वाच्य ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहुयात् ॥ [ आहुत्यनंतरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ] ॥ अथ होमः ॥ [ अग्नेरुत्तरभागे ] ॐ प्रजापतये स्वाहा । इदं प्रजापतये ॥ [ अग्नेर्दक्षिणभागे ] ॐ इंद्राय स्वाहा । इदमिंद्राय [ इत्याघारौ ] [ मध्ये समिद्धतमे ] ॐ अग्नये स्वाहा । इदमग्नये ॥ ॐ सोमाय स्वाहा । इदं सोमाय ॥ [ इत्याज्यभागौ ] ततश्चरुमवधार्य होमः ॥ ॐ यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि ॥ जातवेदो यशोऽअस्मासु धेहि प्रजाभिरग्नेऽअमृतत्वमश्यां स्वाहा ॥ १ ॥ इदमग्नये न मम ॥ ॐ यस्मै त्वं सुकृते जातवेदऽउलोकमग्ने कृणवः स्योनम् ॥ अश्विनं सपुत्रिणं वीरवंतं गोमंतं रयिन्नंशते स्वस्ति स्वाहा ॥ १ ॥ इदमग्नये न मम ॥ ॐ तुभ्यमग्ने पर्यवहन्त्सूर्यां वहतु ना सह ॥ पुनः पतिभ्यो जायां दाग्ने प्रजया सह स्वाहा ॥ १ ॥ इदं सूर्यासावित्र्यै न मम ॥ ॐ सोमो ददद्गंधर्वाय गंधर्वो ददग्नये । रयिं च पुत्राँश्चादादग्निर्मह्यमथोऽइमां स्वाहा ॥२॥ इदं सूर्यासावित्र्यै न मम ॥ ॐ इहैव स्तं मा वियौष्टं विश्वमायुर्व्यश्नुतम् ॥ क्रीळंतौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे स्वाहा ॥ ३ ॥ इदं सूर्यासावित्र्यै न मम ॥

सं०१० ओ३म् आ नः प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा ॥ अदुर्मङ्गलीः पतिलोकमाविश शन्नो भव द्विपदे
३७ शं चतुष्पदे स्वाहा ॥४॥ इदं सूर्यासावित्र्यै न मम ॥ ओ३म् अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः॥
वीरसूर्देवकामा स्योना शन्नो भव द्विपदे शं चतुष्पदे स्वाहा ॥ ५ ॥ इदं सूर्यासावित्र्यै न मम ॥ ओ३म् इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु ॥ दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि स्वाहा ॥ ६ ॥ इदं सूर्यासावित्र्यै न मम ॥ [ तत आज्येन ] ओ३म् भूः स्वाहा इदं भूः ॥ १ ॥ ओ३म् भुवः स्वाहा इदं भुवः ॥ २ ॥ ओ३म् स्वः स्वाहा इदं स्वः ॥ ३ ॥ ओ३म् भूर्भुवः स्वः स्वाहा इदं भूर्भुवः स्वः ॥ ४ ॥ ततोऽन्वारब्धेन चरुघृताभ्याम् । ओ३म् अग्नये स्विष्टकृते
कां० २ स्वाहा । इदमग्नये स्विष्टकृते न मम ॥ तत आज्येन भूराद्या नवाहुतयः ॥ ओ३म् भूः स्वाहा इदमग्नये ॥ १ ॥ ओ३म् भुवः स्वाहा इदं वायवे ॥ २ ॥ ओ३म् स्वः स्वाहा इदं सूर्याय ॥ ३ ॥ ओ३म् त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः॥ यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत्स्वाहा ॥ ४ ॥ इदमग्नीवरुणाभ्यां न मम ॥ ओ३म् स त्वन्नोऽअग्नेवमो भवोती नेदिष्ठो अस्याऽउषसो व्युष्टौ॥अव यक्ष्व नो वरुणꣳरराणो वीहि

मृडीकुर्ठंसुहवो नऽ एधि स्वाहा ॥ ५ ॥ इदमग्नीवरुणाभ्यां न मम ॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमि
त्त्वमयाऽअसि ॥ अया नो यज्ञं वहास्ययानो धेहि भेषजर्ठंस्वाहा ॥ ६ ॥ इदमग्नये ॥ ये ते शतं वरुण ये सहस्रं
यज्ञियाः पाशा वितता महान्तः ॥ तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥ ७ ॥ इदं
वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ ॐ उदुत्तमं वरुणपाशमस्मदवाधमं वि
मद्ध्यमर्ठंश्रथाय ॥ अथावयमादित्यव्रते तवानागसो अदितये स्याम स्वाहा ॥ ८ ॥ इदं वरुणायादित्यायादित
ये च न मम ॥ ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम ॥ ९ ॥ इति नवाहुतयः ॥ ततः संस्रवप्राशनम् ॥
आचमनं च [ ब्रह्मणेपूर्णपात्रदानम् ] ॐ अद्य दत्तपुत्रविधानांगहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रति
ष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतं सदक्षिणाकममुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणात्वेन तुभ्यमहं
संप्रददे ॥ ॐ स्वस्तीति प्रतिवचनम् ॥ ततो ब्रह्मग्रंथिविमोकः ॥ ॐ सुमित्रिया नऽआप ओषधयः संतु॥ इति
प्रणीताजलेन यजमानशिरः सम्मृज्य ॥ ॐ दुर्म्मित्रियास्तस्मै संतु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ इति

सं०१० मंत्रेणैशान्यां प्रणीतान्युब्जीकरणं बर्हिर्होमश्च ॥ ततस्त्र्यायुषकरणं कुर्यात् ॥ एवं होमशेषं समाप्य आचार्यं
३८ वस्त्रालंकारादिभिर्यथाविभवं संपूज्य धेनुं दद्यात् ॥ ब्राह्मणेभ्यो दक्षिणां दत्त्वा तेराशिषो गृहीत्वा सभोपविष्टा
न्गंधतांबूलफलादिभिस्तोषयेत् ॥ ततो दशसंख्याकान्ब्राह्मणान्भोजयित्वा देवता अग्निं च विसृज्य कर्मेश्वरार्पणं
कृत्वा बंधुसुहृद्भिः सह भुंजीत ॥ ततः स्वस्तिवाचनादिनांदीश्राद्धांतं कृत्वा जातकर्मादीन्संस्कारान्कुर्यात् ॥
अथवा चौलोपनयनादि कुर्यात् ॥ इति संस्कारप्रकाशे दत्तपुत्रप्रतिग्रहप्रयोगः ॥ ॥ अथ चूडाकर्म ( चौल )
संस्कारप्रयोगो लिख्यते ॥ ॥ तत्र क्रमः ॥ चौलं स्यात्त्र्येकवर्षाद्युदितमथ कुलान्मातरो बाह्यशालां त्रीन्वि
कां० २ प्रान्भोजयित्वा मनुमितमुदकैश्चौदनं दक्षिणे प्राक् ॥ त्र्येण्या शल्या विनीय त्रिकुशतरुणकं धार्य क्षूरैः सकेशां
श्छित्त्वोक्ष्णो गोमयेऽस्यादिति वदपरयोः केशमेवं नृपाब्दे ॥ १ ॥ अथ प्रयोगः ॥ तत्र संवत्सराभ्यंतरमादित्या
दिशुद्धौ उदगयन आपूर्यमाणपक्षे शुक्रास्तादिदोषरहितारिक्तादिदोषरहिते सोमबुधगुरुशुक्रान्यतमवासरे विहि
तनक्षत्रसमन्वितायां तिथौ ज्योतिःशास्त्रोक्ते सुमुहूर्ते माता कुमारमादाय स्नापयित्वाऽहते वाससी परिधाप्यांक

आधाय कृतनित्यक्रियो यजमानः सपत्नीकः स्वासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य देशका लौ स्मृत्वा अस्य कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणेन बलायुर्वर्चोभिवृद्धिव्यवहारसिद्धिद्वारा श्रीपरमेश्वर प्रीत्यर्थं चौलकर्म करिष्ये। तदंगत्वेन श्रीगणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं च करि ष्ये॥ इति संकल्प्य गणपतिपूजनादिनांदीश्राद्धांतं पूर्ववत्कुर्यात्॥ ततश्चूडाकरणाधिकारार्थं त्रीन्ब्राह्मणान्भोज यित्वा बहिः शालायां चतुरस्रं स्थंडिलं कृत्वा कुशैः परिसमुह्य तान्कुशानैशान्यां परित्यज्य गोमयोदकेनोप लिप्य स्रुवमूलेन प्रादेशमात्रं त्रिरुल्लिख्य उल्लेखनक्रमेणानामिकांगुष्ठाभ्यां मृदमुद्धृत्य वारिणा तं देशमभ्यु क्ष्य कांस्यपात्रेणाग्निमानीय प्रत्यङ्मुखमग्नेरुपसमाधानं कुर्य्यात्॥ ततोऽग्नेः पश्चिमतो यजमानस्तद्दक्षिणादि शि कुमारेण सह पत्नी उपविशति॥ ततः पुष्पचंदनतांबूलद्रव्यवासांस्यादाय कर्तव्यचूडाकरणहोमकर्मणि ब्रह्मकर्म कर्तुं तथा च होतृत्वकर्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेन होतृत्वेन च त्वामहं वृणे। इति वृत्वा ॐ वृतोऽस्मीति प्रतिवचनम्। ॐ यथाविहितं कर्म कुर्विति यजमानः॥

सं०प्र० ॐ करवाणीति प्रतिवचनम् ॥ ततोऽग्नेर्दक्षिणतः शुद्धमासनं विधाय तदुपरि प्रागग्रान्कुशानास्तीर्य तत्र ब्रह्माण
३९ मुपवेश्य [ तदभावे पंचाशत्कुशनिर्मितं वा ब्रह्माणमुत्तराग्रं स्थापयेत् ॥ ] ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा
परिपूर्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याऽग्नेरुत्तरतः कुशोपरि निदध्यात् ॥ [ परिस्तरणम् ] बर्हिषश्चतुर्थ
भागमादाय चतुर्भिर्दर्भदलैरुत्तराग्रैराग्नेयादीशानांतं प्राच्याम् १ प्रागग्रैर्नैर्ऋत्यादाग्नेयांतं दक्षिणस्याम् २
उत्तराग्रैर्नैर्ऋत्याद्वायव्यांतं प्रतीच्याम् ३ पूर्वाग्रैर्वायव्यादीशानांतं चोदीच्यां परिस्तरेत् ॥ ततोऽग्नेरुत्तरतः
पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयम् ३ पवित्रकरणार्थं साग्रमनंतर्गर्भंकुशपत्रद्वयम् २ प्रोक्षणीपात्रम् १ आज्य
कां० २ स्थाली १ सम्मार्जनार्थं कुशत्रयम् ३ उपयमनार्थं कुशत्रयम् ३ समिधस्तिस्रः ३ पालाश्यः । स्रुवः १ आज्यं
गव्यम् । तंडुलपूरितपूर्णपात्रम् १ दक्षिणा। एतानि पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयानि। अमीषा
मुत्तरोत्तरतोऽसाधारणवस्तून्युपकल्पनीयानि तत्र शीतोदकम् ॥ उष्णोदकम् ॥ नवनीतपिंडः घृतपिंडो दधिपिंडो
वा ॥ द्वादशांगुलदीर्घा त्र्येणी शलली ३ ( त्रिःश्वेतशल्लकीकंटकम् ) साग्राणि द्वादशांगुलदीर्घाणि सप्तविंशतिकुश

पत्राणि २७ लोहक्षुरः १ नापितः ॥ वृषभगोमयपिंडः ॥ अन्यदप्याचारान्नालिनींदलादीनि स्थापयेत् ॥ ततः पवित्रच्छेदनकुशैः पवित्रे च्छित्वा सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय द्वाभ्यामनामिकाङ्गुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुद्दिङ्गनम् ॥ ततः प्रोक्षणीपात्रं वामहस्ते कृत्वा अनामिकांगुष्ठगृहीत पवित्राभ्यां प्रोक्षणीजलं त्रिरुत्क्षिप्य प्रणीतोदकेन प्रोक्षणीपात्रमभ्युक्ष्य प्रोक्षणीजलेनासादितवस्तून्यभिषिच्य अग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् ॥ ततः आज्यस्थाल्यामाज्यं कृत्वाऽधिश्रित्य ज्वलत्तृणादिकमादाय आज्यस्योपरि प्रदक्षिणं भ्रामयित्वा वह्नौ तत्प्रक्षिपेत् ॥ ततस्त्रिः स्रुवप्रतपनं कृत्वा सम्मार्जनकुशानामग्रैरंतररतो मूलैर्बाह्यतः स्रुवं संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनः प्रतप्य दक्षिणतो निदध्यात् ॥ ततः अग्नितः प्रदक्षिणक्रमेण आज्यमादायाग्रतो निदध्यात् ॥ ततः प्रोक्षणीवन्निराज्योत्पवनम् । अवेक्ष्य सत्यपद्रव्ये तन्निरसनं पूर्ववत्प्रोक्षण्युत्पवनम् ॥ तत उत्थाय उपयमनकुशानादाय वामहस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः प्रक्षिपेत् ॥ तत उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य प्रणी

सं०प्र० तापात्रे पवित्रे निधाय पातितदक्षिणजानुः ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ जुहुयात् ॥ तत्र प्रत्याहुत्यनतर स्रुवाव
४० स्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः॥ अथ होमः ॥ ॐप्रजापतये स्वाहा इदं प्रजापतये ॥१॥ (इति मनसा)
ॐइंद्राय स्वाहा इदमिंद्राय ॥ २ ॥ ( इत्याघारौ ) ॐअग्नये स्वाहा इदमग्नये ॥ ३ ॥ ॐसोमाय स्वाहा इदं
सोमाय ॥ ४ ॥ ( इत्याज्यभागौ ) ॐभूःस्वाहा इदं भूः ॥ ५ ॥ ॐभुवः स्वाहा इदं भुवः ॥ ६ ॥
ॐस्वः स्वाहा इदं स्वः ॥ ७ ॥ ( एता महाव्याहृतयः ) ॐत्वन्नोऽअग्ने वरुणस्य विद्वांदेवस्य हेडोऽअवयासि
सीष्ठाः॥ यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषां ँ सि प्रमुमुग्ध्युस्मत्स्वाहा ॥ ८ ॥ इदमग्नीवरुणाभ्याम् ॥
ॐस त्वन्नोऽअग्ने वमो भवोती नेदिंष्ठोऽअस्याऽउषसो व्युष्टौ ॥ अवयक्ष्व नों वरुणꣳररांणो वीहि मृंडी कुठं
कां० २ सुहवों नऽएधि स्वाहा ॥ ९ ॥ इदमग्नीवरुणाभ्याम् । ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चं सत्यमिं त्वमया आंसि ॥
अया नों यज्ञम्वहास्ययानो धेहि भेषजꣳस्वाहा ॥ १० ॥ इदमग्नये । ॐयेतें शतंवरुण ये सहस्रं यज्ञियाः
पाशावितंता महान्तः ॥ तेभिंर्नोऽअद्य संवितोत विष्णुर्विश्वें मुञ्चन्तु मरुतं÷स्वर्काःस्वाहा ॥ ११ ॥ इदंवरुणया

सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च ॥ ॐ उदुत्तमंवरुण पाशमस्मदवाधमंविमध्यमठं श्रथाय ॥ अथावयमादित्यव्रते तवानागसोऽअदितये स्याम ॥ १२ ॥ इदं वरुणाय ॥ ॐ प्रजापतये स्वाहा । इदं प्रजापतये ॥ ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते ॥ इति स्विष्टकृत् ॥ ततः संस्रवप्राशनमाचमनं च ॥ पूर्णपात्रदानम् ॥ ॐ अद्य चूडाकरणहोमकर्मणि ब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतं सदक्षिणाकं यथानामगोत्राय ब्राह्मणाय ब्रह्मणे दक्षिणात्वेन तुभ्यमहं संप्रददे ॥ इति ब्रह्मणे दद्यात् ॥ ततो ब्रह्मग्रंथिविमोकः ॥ एवं होत्रेऽपि दक्षिणां दद्यात् ॥ ततः ॐ सुमित्रियानऽआपऽओषधयः संतु ॥ इति पवित्राभ्यां प्रणीताजलमानीय तेन यजमानशिरः संमृज्य ॐ दुर्मित्रियास्तस्मै सन्तु योस्मान्द्वेष्टि यञ्च वयं द्विष्मः ॥ इत्यैशान्यां प्रणीतान्युब्जीकरणम् ॥ ततः स्तरणक्रमेण बर्हिरुत्थाप्याज्येनाभिघार्य ॐ देवागातुविदोगातुं वित्वागातुमितमनसस्पत ॥ इमं देवयज्ञठं स्वाहावातेधाः स्वाहा ॥ १ ॥ इति मंत्रेण बर्हिर्होमः । ततस्त्र्यायुषकरणम् ॥ एवं होमशेषं समाप्य तत एकस्मिन्पात्रे शीतोदके उष्णोदकम् ॥ “ॐ उष्णेन वाय उदकेनेह्यदिते

सं०प्र० केशान्वप ॥ १ ॥ " इति मंत्रेणाभिषिच्य तत्र मिश्रोदके उपकल्पितं नवनीतान्यतमं पिंडं तूष्णीं प्रक्षिप्य दक्षि

४१ णपश्चिमोत्तरक्रमेण पूर्वनिशाबद्धकुमारकेशजूटिकात्रये दक्षिणजूटिकां " ॐसवित्रा प्रसूता दैव्याऽआप उंदंतु

ते तनूम् ॥ दीर्घायुत्वाय बलाय वर्चसे ॥ १ ॥ " इति मंत्रेण तेनैव मिश्रितवारिणा प्रक्षालयेत् ॥ ततो दक्षिणभा

गस्थितजूटिकाया भागत्रयं कृत्वा शल्लकीकंटकेन तूष्णीं केशान्विनीय तत्र एकामेकां जूटिकां प्रति कुशपत्र

त्रयसंयोजनं कुर्यात् । तत्र मंत्रः ॐ ओषधे त्रायस्वस्वधिते मैनंᳬहिᳬसीः ॥ १ ॥ ततः ॐ शिवोनामासि स्वधि

तिस्ते पिता नमस्तेऽअस्तु मा मां हिᳬसीः ॥ १ ॥ इति मंत्रेण क्षुरमादाय ॐ निर्वर्तयाम्यायुषेन्नाद्याय प्रजन

कां० २ नाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥ १ ॥ इत्यनेन मंत्रेण जूटिकासंलग्नीकरणम् ॥ ततः ॐ येनाव

पत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् ॥ तेन ब्रह्माणो वपतेदमस्यायुष्यं जरदष्टिर्यथासम् ॥ १ ॥

इत्यनेन मंत्रेण पश्चिमजूटिकाच्छेदनं कुर्य्यात् ॥ ततस्ताँल्लूनान्कुशपत्रत्रयसहितानानडुहगोमयपिंडोपरि

उत्तरस्यां निदध्यात् ॥ अत्रैव पूर्वप्रक्षालितापरभागद्वये कुशपत्रत्रयांतर्निधानादि कृत्वा पूर्ववत्तूष्णीं छेदनं

कुर्यात् ॥ इति दक्षिणभागस्थकेशच्छेदनम् ॥ अथ पश्चिमजूटिकायां पूर्ववत् "ॐसवित्रा प्रसूता०" इति मंत्रेण प्रक्षालनम् ॥ तूष्णीं शल्लुकीकंटकेन भागत्रयकरणम् ॥ ॐओषधे त्रायस्व स्वधिते मैनंहिंसीः ॥ १ ॥ इति मंत्रेण केशमूलसंलग्नाग्रकेशांतरितमध्यकुशत्रयधारणम् ॥ ॐशिवो नामेति लोहक्षुरग्रहणम् । ॐनिर्वर्तयामीति संलग्नीकरणम् ॥ [ छेदने विशेषमंत्रः ] ॐत्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् ॥ यद्देवेषु त्र्यायुषं तन्नोऽअस्तु त्र्यायुषमिति मंत्रेण च्छित्वा पूर्ववत् गोमयपिंडोपरि निदध्यात् ॥ तत्रावशिष्टभागद्वयेऽपि तूष्णीं वारद्वयं कर्त्तव्यं केशानां गोमयपिंडोपरि धारणं च ॥ २ ॥ अथोत्तरजूटिकायां पूर्वोक्तमंत्रैः प्रक्षालनादिक्षुरसंयोजनांतं कृत्वा प्रथमभागजूटिकां ॐ येन भूरिश्चरादिवं ज्योक्च पश्चाद्धि सूर्यम् ॥ तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तये ॥ १ ॥ इति मंत्रेण संछिद्य गोमयपिंडोपरि निदध्यात् ॥ ततोऽवशिष्टभागद्वयं पूर्ववत्तूष्णीं छेदनं कृत्वा गोमयपिंडोपरि धारणम् ॥ ततः ॐ यत्क्षुरेण मज्जयिता सुपेशसा वप्तावावपति केशाँश्छिंधि शिरो माऽस्यायुः प्रमोषीः ॥ १ ॥ इति मंत्रेण शिरः समंतात्प्रदक्षिणं क्षुरं भ्रामयेद्धिस्तूष्णीम् ॥

सं०प्र० ततस्तेनैवोदकेन समस्तं शिरः प्रक्षाल्य ॐअक्षण्वन्परिवप ॥ इति मंत्रेण नापिताय क्षुरं प्रयच्छति ॥ अथ
४२ नापितः शिखां धृत्वा समस्तशिरोवपनं यथाकुलाचारं वा कुर्यात् ॥ ततस्तांश्च केशान्गोमयपिंडे दधिभक्तदुग्ध
समन्वितान्कृत्वा नूतनवस्त्रेणावेष्ट्य अनुगुप्तं कृत्वा गवां गोष्ठे स्थापयेत् ॥ अथवा तडागोदकसमीपे स्थाप
येत् ॥ ततः आचार्याय दक्षिणां दत्त्वा दशसंख्याकान्ब्राह्मणान्भोजयेत् ॥ इति चूडाकरणसंस्कारप्रयोगः
समाप्तः ॥ ॥ अथ कर्णवेधः ॥ तच्च तृतीये वर्षे पंचमे वा ज्योतिःशास्त्रोक्तशुभमासे शुक्लपक्षे शुभदिने शुभ
मुहूर्त्ते कार्यम् ॥कृतमगलस्नानोऽहते वाससी परिधाय धृतमंगलतिलकः शुभासने प्राङ्मुख उपविश्य आचम्य
कां० २ प्राणानायम्य देशकालौ स्मृत्वा अस्य कुमारस्य आयुरभिवृद्धिसिद्धये कर्णवेधं करिष्ये। तदंगत्वेन निर्विघ्न
तार्थं गणपतिपूजनं करिष्ये ॥ इति संकल्प्य गणेशपूजां कुलदेवतापूजां च कृत्वा ब्राह्मणांश्च नत्वा कुमारं
प्राङ्मुखं शुभासने उपवेश्य तद्धस्ते मधुरं दत्त्वा दक्षिणं कर्णमभिमंत्रयते ॐभद्रं कर्णेभिः शृणुयाम देवा
भद्रं पश्येम अक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ १ ॥ इति मंत्रेणाभि

मंत्र्य ततो वामकर्णम् ॐवृक्षन्ती वेदागनीगंति कर्णम्प्रियर्ठस्सखायं परिषस्वंजानाः ॥ योषेव शिंक्ते वितताधि धन्वञ्ज्याऽइयर्ठ समने पारयन्ति ॥ १ ॥ इत्यभिमंत्रयेत् ॥ ततः कर्णमध्यं वीक्ष्य यथाविभवं सुवर्णादिसूच्या मंगलसूत्रोपेतया कुशलसुभगास्त्रिया कर्णं वेधयेत् ॥ कुमारस्य पूर्वं दक्षिणकर्णं कुमार्यास्तु पूर्वं वामकर्णं वेध येत् ॥ ततो यथाशक्ति ब्राह्मणभोजनं समाचारान्मधुरादिदानं च कुर्यात् ॥ इति कर्णवेधप्रकारः ॥ ॥ अथ वर्धा पनविधानम् ॥ तच्च वर्षपर्यंतं प्रतिमासे जन्मतिथौ कार्यम् ॥ वर्षोत्तरं प्रत्यब्दं जन्मतिथौ कार्यम् ॥ तिथिद्वैधे यत्र जन्मर्क्षयोगः सा तिथिर्ग्राह्या दिनद्वये जन्मर्क्षयोगसत्त्वासत्त्वयोरौदयिकी द्विमुहूर्ताधिका ग्राह्या द्विमुहूर्ते न्यूनत्वे पूर्वा ॥ जन्ममासाधिमासत्वे शुद्धे मासि प्रत्याब्दिकवर्धापनविधिर्न त्वधिके [ इदं वर्धापनं बाल्ये पित्रादिना कार्यं पश्चात्तु स्वयमेव कार्यम् ] ॥ अथ वर्धापनप्रयोगः ॥ जन्मदिने कुमारपत्नीसहितो यजमानः मंगलस्नानं कृत्वा अहतवाससी परिधाय धृतमंगलतिलको मातापितरौ गुर्वाचार्यकुलदेवता विप्रांश्च नमस्कृत्य गृहाभ्यंतरतः शुभासने प्राङ्मुख उपविश्य स्वदक्षिणतः पत्नीं तद्दक्षिणतः कुमारमुपवेश्य धृतपवित्रपाणि

सं०प्र० राचांतः प्राणानायम्य देशकालौ स्मृत्वा अस्य कुमारस्य दीर्घायुःश्रीतेजोवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमद्य
४३ जन्मदिने वर्धापनाख्यं कर्म करिष्ये [ स्वयंकरणे च मम दीर्घायुस्तेजोवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमद्य
मदीयजन्मदिने वर्धापनाख्यं कर्म करिष्ये ] तदंगत्वेन गणपतिपूजनं स्वस्तिपुण्याहवाचनं च करिष्ये ॥ इति
संकल्प्य पूर्ववत् गणपतिपूजनं पुण्याहवाचनं च कुर्यात् ॥ ततः श्रीपर्ण्यादिपीठे पंक्तिरूपेणाक्षतपुंजेषु देवताः
स्थापयेत् ॥ तद्यथा ॥ ॐगणपतये नमः गणपतिमावाहयामि ॥ १ ॥ ॐदुर्गायै नमः दुर्गामावाहयामि ॥ २ ॥
[ एवं सर्वत्र ] ॐकुलदेवतायै नमः कु० ॥ ३ ॥ ॐप्रजापतये नमः प्र० ॥ ४ ॥ ॐविष्णवे नमः वि० ॥ ५ ॥
कां० २ ॐमहेश्वराय नमः म० ॥ ६ ॥ ॐसूर्याय नमः सू० ॥ ७ ॥ ॐसोमाय नमः सो० ॥ ८ ॥ ॐभौमाय नमः
भौ० ॥ ९ ॥ ॐबुधाय नमः बु० ॥ १० ॥ ॐबृहस्पतये नमः बृ० ॥ ११ ॥ ॐशुक्राय नमः शु० ॥ १२ ॥
ॐशनैश्चराय नमः श० ॥ १३ ॥ ॐराहवे नमः रा० ॥ १४ ॥ ॐकेतवे नमः के० ॥ १५ ॥
ॐकालाय नमः का० ॥ १६ ॥ ॐयुगाय नमः यु० ॥ १७ ॥ ॐसंवत्सराय नमः सं० ॥ १८ ॥ ॐअयनाय

नमः अ० ॥ १९ ॥ ॐऋतवे नमः ऋ० ॥ २० ॥ ॐमासाय नमः मा० ॥ २१ ॥ ॐपक्षाय नमः प० ॥ २२ ॥ ॐजन्मतिथये नमः ज० ॥ २३ ॥ ॐजन्मनक्षत्राय नमः ज० ॥ २४ ॥ ॐजन्मयोगाय नमः ज० ॥ २५ ॥ ॐजन्मकरणाय नमः ज० ॥ २६ ॥ ॐजन्मराशये नमः ज० ॥२७॥ ॐजन्मलग्नाय नमः ज० ॥२८॥ ॐशिवायै नमः शि० ॥ २९ ॥ ॐसंभूत्यै नमः सं० ॥ ३० ॥ ॐप्रीत्यै नमः प्री० ॥ ३१ ॥ ॐसंतत्यै नमः सं० ॥ ३२ ॥ ॐअनसूयायै नमः अ० ॥ ३३ ॥ ॐक्षमायै नमः क्ष० ॥ ३४ ॥ ॐउपविष्टायै नमः उ० ॥ ३५ ॥ ॐभद्रायै नमः भ० ॥ ३६ ॥ ततः पंक्तिरूपेणाष्टदलानि त्रीणि विरच्य तदुपरि पूगीफलेषु देवताः स्थापयेत् ॥ ॐषष्ठ्यै देव्यै नमः ष० ॥१॥ ॐ मार्कंडेयाय नमः मा० ॥२॥ ॐजमदग्नये नमः ज० ॥ ३ ॥ [पुनस्तदग्रे पंक्तिरूपेणाक्षतपुंजेषु ] ॐअश्वत्थाम्ने नमः अश्वत्थामानमावाहयामि ॥१॥ [ एवं सर्वत्र ] ॐबलये नमः ब० ॥२॥ ॐव्यासाय नमः व्या० ॥ ३ ॥ ॐबिभीषणाय नमः वि० ॥ ४ ॥ ॐकृपाचार्याय नमः कृ० ॥ ५ ॥ ॐपरशुरामाय नमः प० ॥६॥ ॐकार्तिकेयाय नमः का० ॥७॥ [पुनः पंक्तिरूपेणाक्षतपुंजेषु] ॐइष्टदेवतायै नमः इ० ॥१॥

सं०प्र० ॐस्थानदेवतायै नमः स्था० ॥ २ ॥ ॐवास्तुदवेतायै नमः वा० ॥ ३ ॥ ॐक्षेत्रपालाय नमः क्षे० ॥ ४ ॥ ॐ
४४ पृथिव्यै नमः पृ० ॥ ५ ॥ ॐअद्भ्यो नमः अ०॥ ६ ॥ ॐतेजसे नमः ते० ॥ ७ ॥ ॐवायवे नमः वा० ॥ ८ ॥ ॐ
आकाशाय नमः आ० ॥ ९ ॥ [सर्वासां समंतात्प्रागादिदिक्षु वा पंक्तिरूपेण] ॐइंद्राय नमः इं० ॥ १ ॥ ॐअग्न
ये नमः अ० ॥ २ ॥ ॐयमाय नमः य०॥ ३ ॥ ॐनिर्ऋतये नमः नि० ॥ ४॥ ॐवरुणाय नमः व० ॥ ५ ॥
ॐवायवे नमः वा० ॥ ६ ॥ ॐकुबेराय नमः कु० ॥ ७॥ ॐईश्वराय नमः ई० ॥ ८ ॥ ॐब्रह्मणे नमः ब्र०
॥ ९ ॥ ॐअनंताय नमः अ० ॥१०॥ इत्यावाह्य ॥ "ॐमनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं
कां० २ यज्ञꣳसमिमं दधातु ॥ विश्वे देवास इह मादयन्तामों ३ म्प्रतिष्ठ ॥ १ ॥" इति प्रतिष्ठाप्य "ॐआवो देवासऽईम
हे व्वामम्प्रयत्त्यध्वरे ॥ आवो देवासऽ आशिषो यज्ञियासो हवामहे ॥१॥ " ॐभूर्भुवः स्वः मार्कंडेयाद्यावाहित
देवताभ्यो नमः ॥ इति मंत्रेण पाद्यादिभिः षोडशोपचारैः संपूजयेत् ॥ ततः । ॐषष्ठीदेव्यै नमः ॥ इदं दधिभ
क्तनैवेद्यं समर्पयामि ॥ ॐमार्कंडेयादिमंडलदेवताभ्यो नमः ॥ पायसबलिं समर्पयामि ॥ इति नैवेद्यं समर्प्य

प्रार्थयेत् ॥ अथ प्रार्थना ॥ जय देवि जगन्मातर्जगदानंदकारिणि ॥ प्रसीद मम कल्याणि नमस्ते षष्ठिदेवते॥१॥
आयुःप्रद महाभाग सोमवंशसमुद्भव ॥ महातपोनिधिश्रेष्ठ मार्कंडेय नमोऽस्तुते ॥ २ ॥ चिरंजीवो यथा त्वं भो
भविष्यामि तथा मुने ॥ रूपवान्वित्तवानायुःश्रिया युक्तं च मां कुरु॥३॥ [कर्ता पिता चेत्तर्हिश्रिया युक्तं शिशुं कुरु
इति] मार्कंडेय नमस्तेऽस्तु सप्तकल्पांतजीवन ॥ आयुरारोग्यं मे देहि प्रसीद भगवन्मुने ॥४॥ [कर्ता पिता चेत्
'आयुरारोग्यं बालाय देहि त्वं भगवन्मुने'] चिरंजीवो यथा त्वं भो मुनीनां प्रवरो द्विज॥ कुरुष्व मुनिशार्दूल तथा
मां चिरजीविनम् ॥ ५ ॥[कर्ता पिता चेत् 'बालं मे चिरजीविनम्' इति]जमदग्ने महाभाग महातेजोमयोज्ज्वल ॥
आयुरारोग्यसिद्ध्यर्थमस्माकं वरदो भव॥६॥[कर्ता पिता चेत् 'बालाय वरदो भव'] त्रैलोक्ये यानि भूतानि स्थाव
राणि चराणि च ॥ ब्रह्मविष्णुशिवैः सार्धं रक्षां कुर्वंतु तानि मे ॥ ७ ॥ प्रीयंतां देवताः सर्वाः पूजां गृह्णंतु ता
मम ॥ प्रयच्छंत्वायुरारोग्यं यशः सौख्यं च सर्वदा ॥ ८॥ मंत्रन्यूनं क्रियान्यूनं द्रव्यन्यूनं महामुने ॥ यदर्चितं
मया देव परिपूर्णं तदस्तु मे ॥९॥ अनया पूजया मार्कंडेयाद्यावाहितदेवताः प्रीयंताम् ॥ ततः ॐ सर्वेभ्यो भूतेभ्यो

सं० प्र०
४५
नमः इति पायसबलिं दद्यात् ॥ ततो हस्तमात्रं चतुरस्रं स्थंडिलं कृत्वा कुशत्रयेण परिसमुह्य तान्कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेन प्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्योल्लेखनक्रमेणानामिकांगुष्ठाभ्यां मृदमुद्धृत्यैशान्यां क्षिप्त्वा तं देशं जलेनाभिषिच्य कांस्यपात्रेणाग्निमुपसमाधाय 'ॐहुंफट्' इति मंत्रेण क्रव्यादांशं नैर्ऋत्यां दिशि परित्यज्य "ॐअग्निं दूतम्पुरो दधे हव्यवाहमुपब्रुवे ॥ देवाँऽआसादयादिह॥" इति मंत्रेणाभिमुखमग्निं स्थापयेत् ॥ ततः अग्न्यानीतपात्रद्वये साक्षतोदकं निषिच्य आचार्योऽग्नेर्दक्षिणतः परिस्तरणभूमिं त्यक्त्वा ब्रह्मणे आसनं दत्त्वा तदुपरि प्रागग्रान्कुशानास्तीर्य ॐअद्य कर्तव्यवर्धापनहोमक

कां० २
र्मणि ब्रह्मकर्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलद्रव्यवासोभिर्ब्रह्मत्वेन त्वामहं वृणे । ॐवृतोऽस्मीति प्रतिवचनानंतरम् ॥ ॐयथाविहितं कर्म कुरु । इति यजमानः । ॐकरवाणीति प्रतिवचनम् ॥ एवमेव होतारं वृणुयात् ॥ ततो ब्रह्माणमग्निप्रदक्षिणक्रमेणानीय कल्पितासने उपवेशयेत् ॥ [ तदभावे पंचाशत्कुशनिर्मितं वा ब्रह्माणं स्थापयेत् ॥ ] ततः परिस्तरणम् ॥ बर्हिषश्चतुर्थभाग १६ मादाय चतुर्भिश्चतुर्भिर्दर्भै

दलैरुत्तराग्रैः प्राच्याम् १ प्रागग्रैर्दक्षिणस्याम् २ उदगग्रैः प्रतीच्याम् ३ पूर्वाग्रैरुदीच्यां च स्तृणुयात् ॥ ततोऽग्रेरुत्तरतःपश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयम् ३पवित्रकरणार्थं साग्रे अनंतगर्भे द्वे कुशपत्रे२प्रोक्षणीपात्रम्१ आज्यस्थाली १ चरुस्थाली १ संमार्जनकुशाः पंच ५ उपयमनकुशाः सप्त ७ समिधस्तिस्रः पालाश्यः प्रादेशमात्राः ३ स्रुवः खादिरो हस्तमात्रः १ आज्यं गव्यम् । चर्वर्थास्तंडुलाः । घृताक्तास्तिलाः । दूर्वाकुराणि । तंडुलपूरितं पूर्णपात्रम् १ दक्षिणा वरो वा । एतानि पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयानि ॥ ततः पवित्रच्छेदनैः पवित्रच्छेदनम् ॥ तद्यथा ॥ द्वयोः पवित्रयोरुपरि कुशत्रयं निधाय अग्रतः प्रादेशमात्रं विहाय त्रिभिः कुशैर्द्वे कुशतरुणे प्रच्छिद्य द्वयोर्मूलं त्रीणि चोत्तरतः क्षिपेत् ॥ ततः सपवित्रहस्तेन प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निक्षिप्य अनामिकांगुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्पवनम् ॥ प्रोक्षणीपात्रस्य सव्यहस्ते करणम् ॥ अनामिकांगुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुद्दिंगनम् ॥ ततः प्रणीतोदकेन प्रोक्षणीप्रोक्षणं प्रोक्षणीजलेन आज्यस्थाल्यादीनि पूर्णपात्रपर्यंतानि क्रमेणैकैकशः प्रोक्ष्य असंचरे प्रणीताग्न्योर्मध्ये प्रोक्षणीपात्रं निधाय

सं०प्र०
आसादितमाज्यमाज्यस्थाल्यां प्रक्षिप्य चरुस्थाल्यां प्रणीतोदकमासिच्य तत्र तंडुलान्प्रक्षिप्य तत्राज्य ब्रह्माधि
४६
श्रयति॥ तदुत्तरतो होता चरुं युगपदग्नावारोप्य सिद्धे चरौ ज्वलदुल्मुकं प्रदक्षिणमाज्यचर्वोः समंताद्भ्रामयेत्॥
ततो दक्षिणपाणिना स्रुवमादाय अधोमुखमग्नौ तापयित्वा सव्ये पाणौ कृत्वा दक्षिणेन सम्मार्जनाग्रैर्मूलतोऽग्रप
र्यंतम्मूलैरग्रमारभ्य अधस्तान्मूलपर्यंतं संमृज्य प्रणीतोदकेनाभिषिच्य पुनःपूर्ववत्प्रताप्य दक्षिणतो निदध्यात्
तत आज्यमुत्थाप्य चरोः पूर्वेण नीत्वाग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्य आज्यस्य पश्चिमतो नीत्वाज्यस्यो
त्तरतः स्थापयित्वा आज्यमग्नेः पश्चादानीय आज्यस्योत्तरतो निदध्यात्॥ ततः पवित्राभ्यामाज्यमुत्पूय अवलो
कां० २
क्य तस्मादपद्रव्यनिरसनं पुनः प्रोक्षण्युत्पवनम्॥ ततः उपयमनकुशानादाय उत्तिष्ठन्प्रजापतिं मनसा ध्यात्वा
तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः प्रक्षिपेत् तत उपविश्य प्रोक्षण्युदकेन सपवित्रेणाग्निमीशानादि उदक्पर्यंतं
परिषिच्य दक्षिणं जान्वाच्य ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहुयात् [ आहुत्यनंतरं स्रुवावस्थि
तहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ]॥ अथ होमः॥ [ अग्नेरुत्तरभागे ] ॐ प्रजापतये स्वाहा इदं प्रजापतये

न मम । [ अग्नेर्दक्षिणभागे ] ॐ इंद्राय स्वाहा इदमिंद्राय न मम ॥ [ इत्याघारौ ] [ मध्ये समिद्धतमे ] ॐ अग्नये स्वाहा । इदमग्नये न मम ॥ ॐ सोमाय स्वाहा । इदं सोमाय न मम ॥ [ इत्याज्यभागौ ] एवमाज्यभागांतं कर्म कृत्वा ॐ अग्नये नमः इत्यग्निं षोडशोपचारैः संपूजयेत् ॥ ततः पूजितदेवताभ्यो नाम्ना प्रत्येकमष्टाविंशतिरष्टौ वा घृताक्ततिलैर्जुहुयात् ॥ तद्यथा । ॐ गणपतये स्वाहा इदं गणपतये १ ॐ दुर्गायै स्वाहा । इदं० २ ॐ कुलदेवतायै०इदं०३ ॐ प्रजापतये० इदं० ४ ॐ विष्णवे० इदं० ५ ॐ महेश्वराय० इदं० ६ ॐ सूर्याय स्वाहा । इदं० ७ ॐ सोमाय० इदं० ८ ॐ भौमाय स्वाहा इदं० ९ ॐ बुधाय० इदं० १० ॐ बृहस्पतये० इदं० ११ ॐ शुक्राय० इदं० १२ ॐ शनैश्चराय० इदं० १३ ॐ राहवे० इदं० १४ ॐ केतवे० इदं० १५ ॐ कालाय० इदं० १६ ॐ युगाय० इदं० १७ ॐ संवत्सराय० इदं० १८ ॐ अयनाय० इदं० १९ ॐ ऋतवे० इदं० २० ॐ मासाय० इदं० २१ ॐ पक्षाय० इदं० २२ ॐ जन्मतिथये० इदं० २३ ॐ जन्मनक्षत्राय० इदं० २४ ॐ जन्मयोगाय० इदं० २५ ॐ जन्मकरणाय० इदं० २६ ॐ जन्मराशये० इदं० २७ ॐ शिवायै

सं०प्र० स्वाहा इदं० २८ [ इदं सर्वत्र ज्ञेयम् ] ॐ संभृत्यै० २९ ॐ प्रीत्यै० ३० ॐ संतत्यै० ३१ ॐ अनसूयायै० ३२
४७ ॐ क्षमायै० ३३ ॐ उपविष्टायै० ३४ ॐ भद्रायै ३५ ॐ षष्ठीदेव्यै स्वाहा० ३६ ॐ मार्कंडेयाय० ३७
ॐ जमदग्नये० ३८ ॐ अश्वत्थाम्ने० ३९ ॐ बलये० ४० ॐ व्यासाय० ४१ ॐ बिभीषणाय ४२ ॐ कृपा
चार्याय० ४३ ॐ परशुरामाय० ४४ ॐ कार्तिकेयाय० ४५ ॐ इष्टदेवतायै० ४६ ॐ ग्रामदेवतायै० ४७
ॐ स्थानदेवतायै० ४८ ॐ वास्तुदेवतायै० ४९ ॐ क्षेत्रपालाय० ५० ॐ पृथिव्यै० ५१ ॐ अद्भ्यः स्वाहा०
५२ ॐ तेजसे० ५३ ॐ वायवे० ५४ ॐ आकाशाय० ५५ ॐ इंद्राय० ५६ ॐ अग्नये० ५७ ॐ
कां० २ यमाय० ५८ ॐ निर्ऋतये० ५९ ॐ वरुणाय० ६० ॐ वायवे० ६१ ॐ कुबेराय० ६२ ॐ ईशा
नाय० ६३ ॐ ब्रह्मणे० ६४ ॐ अनंताय स्वाहा इदमनंताय ६५ ॥ ततः आयुरारोग्यवृद्ध्यर्थं मृत्युंजय
मंत्रेणाष्टोत्तरशतसंख्यया घृतमधुरान्वितपायसहोमः ॥ मंत्रमहोदधौ "स्वजन्मदिवसे यस्तु पायसैर्मधुरा
न्वितैः ॥ जुहोति तस्य वर्द्धते कमलारोग्यकीर्तयः ॥१॥ अष्टोत्तरशतं दूर्वात्रिकहोमाद्रुजां क्षयः ॥" तत्र मंत्रः॥

ॐह्रौं ॐजूं सः ॐभूर्भुवः स्वः ॐत्र्यंबकं यजामहे सुगंधिम्पुष्टिवर्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमा
मृतात् ॐ भूर्भुवः स्वरों जूं सः ॐह्रौं ॐस्वाहा१०८इदं त्र्यंबकाय ॥ ततः शेषेण ॐअग्नये स्विष्टकृते स्वाहा इद
मग्नये स्विष्टकृते न मम इति स्विष्टकृत ॥ तत आज्येन ॐभूः स्वाहा इदमग्नये १ ॐभुवः स्वाहा इदं वायवे २
ॐ स्वः स्वाहा इदं सूर्याय ३ ॥ इति व्याहृतिहोमः॥ॐत्वन्नोऽअग्ने वरुणस्यविद्वान्देवस्य हेडो अवयासिसीष्ठाः॥
यजिष्ठो वह्नितमःशोशुचानो विश्वा द्वेषांश्सि प्रमुमुग्ध्यस्मत्स्वाहा ॥ १ ॥ इदमग्नीवरुणाभ्यां न मम । ॐ स
त्वन्नोऽअग्नेऽवमो भवोतीनेदिंष्ठोऽअस्या उषसो व्युष्टौ ॥ अवयक्ष्व नो वरुणर्ठरराणो वीहिमृर्डीकर्ठसुहवो नऽएधि
स्वाहा ॥ २ ॥ इदमग्नीवरुणाभ्यां न मम ॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्त्वमयाऽअसि ॥ अया नो
यज्ञं वहास्ययानो धेहि भेषजर्ठ स्वाहा ॥३॥ इदमग्नये अयसे न मम ॥ ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः
पाशा वितता महान्तः ॥ तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥ ४ ॥ इदं
वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ ॐउदुत्तमं वरुण पाश मस्मदवा

सं०प्र० धुमं विमध्युमर्ठं श्रथाय ॥ अथावयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा ॥५॥ इदं वरुणायादित्या
४८ यादितये च न मम ॥ ॐप्रजापतये स्वाहा इदं प्रजापतये न मम॥६॥ततः संस्रवप्राशनम् आचमनं च। (ब्रह्मणे
पूर्णपात्रदानम् ) अद्य कृतैतद्वधोपनहोमकर्मणि ब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतं सदक्षिणाकम
मुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणात्वेन तुभ्यमहं संप्रददे इति दक्षिणां दद्यात्। ॐ स्वस्तीति
प्रतिवचनम् ॥ ततो ब्रह्मग्रंथिविमोकः ॥ एवमेव होत्रे दक्षिणां दद्यात् ॥ ततः ॐ सुमित्रियानऽआप ओषधयः
संतु इति पवित्राभ्यां प्रणीताजलेन शिरःसंमृज्य ॐ दुर्म्मित्रियास्तस्मै संतुयोस्मान्द्वेष्टि यं च वयं द्विष्मः।
कां० २ इत्यैशान्यां प्रणीतान्युब्जीकरणम् ॥ ततः स्तरणक्रमेण बर्हिरुत्थाप्याज्येनाभिघार्य ॐ देवा गातु विदो गातुं
वित्वागातुमित मनसस्पत ॥ इमं देवयज्ञर्ठं स्वाहा वातेधाः स्वाहा ॥ १॥ इति बर्हिर्होमः ॥ ततस्त्र्यायुषकरणम्॥
एवं होमशेषं समाप्य दानानि दद्यात् ॥ तत्रादौ सुवर्णयुक्ततिलपात्रदानम् । तद्यथा ॥ ममास्य पुत्रस्य आयुरा
रोग्यप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थमिदं तिलपूर्णपात्रं ससुवर्णममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्र

ददे इति दद्यात् ॥ ॐ तिलाः काश्यपसंभूतास्तिलाः पापहराः स्मृताः ॥ तिलकांचनदानेन दीर्घायुष्यं ददातु मे ॥ १ ॥ इति प्रार्थयेत् ॥ एवं घृतपूरितकांस्यपात्रं दत्त्वा ॐ आज्यं तेजः समुद्दिष्टमाज्यं यज्ञे प्रतिष्ठितम् ॥ आज्यपात्रप्रदानेन दीर्घायुष्यं कुरुष्व मे ॥ १ ॥ इति प्रार्थयेत् ॥ ततस्तिलशर्करायुतं पयः पिबेत् ॥ तत्र मंत्रः ॥ सतिलं शर्करामिश्रमंजल्यर्धमितं पयः ॥ मार्कंडेयाद्बलं लब्ध्वा पिबाम्यायुर्विवृद्धये ॥ १ ॥ इति मंत्रेण पिबेत् ॥ ततो गंधादिभिर्ब्राह्मणान्संपूज्य तेभ्यश्च दक्षिणां दत्त्वा तैराशिषो गृहीत्वा आवाहितदेवता अग्निं च विसृज्य यथाशक्ति ब्राह्मणान्भोजयेत् ॥ ततः सुहृद्बंधुभिः सह स्वयं भुंजीत ॥ इति श्रीसंस्कारप्रकाशे वर्धापनकर्म प्रयोगः समाप्तः ॥

॥ अथ वर्धापनकर्म्मणः सामग्री लिख्यते ॥ कुंकुमकेशरचंदनानि । पुष्पाणि विचित्राणि । पुष्पमालाः । वस्त्राणि । तंडुलाः । यज्ञोपवीतम् । धूपदीपाः । नैवेद्यं मोदकपायसादि । नारिकेलफलम् । ऋतुकालोद्भवफलानि । तांबूलानि । पूगीफलानि । आचार्यादिवरणोपकरणानि । होमार्थं तिलाः । यवाः । तंडुलाः । घृतं गव्यम् । शर्करा । गुग्गुल्वादिसुगंधिद्रव्याणि । स्रुवः । प्रणीता । प्रोक्षणी । दर्भाः । दूर्वाः । पूर्णपात्रम् ।

बल्यर्थे माषभक्तम् । अश्वत्थोदुंबरप्लक्षचूतन्यग्रोधसंभवाः पंचपल्लवाः । सर्वौषध्यः । सप्त मृदः । दुग्धम् । दधि । मधु । ताम्रकलशः १ । मृन्मयकलशः १ । स्वर्णशकलानि ४ । रक्तसूत्रम् । छायापात्रम् १ । स्थाली कांस्यमयी २ । कांस्यमयीकटोरी २ । पंचरत्नानि । धेनुदानम् । तिलपूरितकांस्यपात्रदानम् । घृतपूरितकांस्यपात्रदानम् । आचार्यादिदक्षिणा । ब्राह्मणभोजनम् । भूयसी दक्षिणा ॥ इति वर्धापनकर्मोपकरणानि ॥ ॥ अथ अक्षरलेखनारंभविधिप्रयोगः ॥ तत्र पंचमे वर्षे ज्योतिःशास्त्रोक्ते सुकाले शुक्लपक्षे चंद्रतारादिबलान्विते शुभदिने शुभमुहूर्ते यजमानः शिशुना सह मंगलस्नानं कृत्वाऽहते वाससी परिधायालंकृत्य धृतमंगलतिलकः शुभासने प्राङ्मुख उपविश्य



आचम्य प्राणानायम्य देशकालौ स्मृत्वा अस्य शिशोः लेखनवाचनादिविपुलविद्याज्ञानप्राप्तये विद्यारंभं करिष्ये । तत्र निर्विघ्नतार्थं गणपतिपूजनं करिष्ये ॥ इति संकल्प्य 'सुमुखश्चैकदंतश्च' इत्यादिस्मरणपूर्वकं गणपतिं षोडशोपचारैः संपूजयेत् ॥ ततस्तंडुलैरष्टदलं कृत्वा तत्र पूर्वादिक्रमेण ॥ ॐ गणपतये नमः गणपतिमावाहयामि १ ॐ सरस्वत्यै नमः सरस्वतीमावाहयामि २ ॐ कुलदेवतायै नमः कुलदेवतामा० ३ ॐ गुरवे नमः

गुरुमा० ४ ॐ लक्ष्म्यै नमः लक्ष्मीमा० ५ ॐ नारायणाय नमः नारायणमा० ६ ॐ यजुर्वेदाय नमः यजुर्वेदमा० ७ ॐ कात्यायनाय नमः कात्यायनमावाहयामि ॥ ८ ॥ इत्यावाह्य नाममंत्रेण षोडशोपचारैः संपूजयेत् ॥ ॐ अनया पूजया आवाहितदेवताः प्रीयंताम् ॥ ततो ब्राह्मणान्धात्रीमध्यापनगुरुं च गंधादिभिः संपूज्य नमस्कृत्य अक्षरारंभं कुर्य्यात् ॥ तद्यथा ॥ अध्यापनगुरोः समीपे प्रत्यङ्मुख उपविश्य रजतादिपाटिकायां कुंकुमादिकं प्रसार्य्य तदुपरि सुवर्णादिशलाकया श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीकुलदेवतायै नमः ॥ श्रीगुरुभ्यो नमः ॥ श्रीलक्ष्मीनारायणाभ्यां नमः ॥ ॐ नमः सिद्धम् ॥ इत्यादि संलेख्य । ॐ पावुका नुः सरस्वती वाजेभिर्वाजिनीवती ॥ यज्ञं वष्टु धिया वसुः ॥ १ ॥ ॐ लिखितसरस्वत्यै नमः ॥ इति मंत्रेण कुंकुमादिना संपूज्य नैवेद्यं श्रीफलादिकं समर्पयेत् ॥ ततो गुरुः कुमारहस्तात्त्रिवारं लेखनवाचनादिकं कारयेत् ॥ अनंतरं कुमारः देवताक्षरं गुरुं च त्रिः प्रदक्षिणीकृत्य गुरवे वस्त्रादिकं समर्प्य विसर्जयेत् ॥ इति विद्यारंभविधानम् ॥ इति श्रीरत्नगडनगरनिवासिना श्रीवसिष्ठकुलोद्भवेन श्रीरामकृष्णामरचंद्रपौत्रेण श्रीकस्तूरीचंद्रात्मजेन

सं०प्र० श्रीचतुर्भुजदत्तसूनुना श्रीमहादेवभक्तशुक्लयजुर्वेदीयमाध्यंदिनशाखानुयायिना गौडवंशावतंसपंडितश्रीचतुर्थी
५० लालशर्म्मणा विरचिते संस्कारप्रकाशे प्रयोगनिबंधे गर्भाधानादिविद्यारंभांतसंस्कारनिरूपणं नाम द्वितीयः
कांडः समाप्तः ॥ २ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



का० २

॥ ॥ अथ तृतीयः काण्डः ॥ ॥ अथोपनयनं वक्ष्ये द्विजताब्रह्मप्राप्तये ॥ सूत्रैः कात्यायनीयैश्च भाष्यैर्हरिहरादिभिः ॥ १ ॥ तत्र तावल्लुप्तसंस्कारप्रायश्चित्तम् ॥ गर्भाधानादिचूडाकरणांतानि संस्कारकर्माणि नियतकालविहितानि प्रागुक्तानि । परं च । अधुना कलिदोषाद्दैववशात्पुरुषापराधादुपदेशाभावाद्वा तेषां नियतकालस्य अतिक्रमो भवति तदा प्रायश्चित्तं विधीयते ॥ तत्र प्रयोगः ॥ अथोपनयनदिनात्पूर्वेह्नि प्रातः स्नात्वा अहते वाससी परिधाय कृतनित्यक्रियो यजमानः स्वासने प्राङ्मुख उपविश्य सपवित्रकरः आचम्य प्राणानायम्य देशकालौ संकीर्त्य अस्य कुमारस्य [ स्वयंकरणे मम ] गर्भाधानादिचूडाकरणांतानां संस्काराणां कालातिपत्तिजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थमनादिष्टप्रायश्चित्तहोमपूर्वकं गोदानं यथाशक्त्या करिष्ये ॥ इति संकल्प्य गणेशं पूजयेत् ॥ ततो हस्तपरिमितं चतुरस्रं स्थंडिलं कृत्वा कुशैः परिसमुह्य तानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेन प्रागग्रप्रादेशमात्रं त्रिरुल्लिख्य उल्लेखनक्रमेणानामिकांगुष्ठाभ्यां मृदमुद्धृत्य वारिणा तं देशमभ्युक्ष्य कांस्यपात्रेणाग्निमानीय ॐ हुं फट् इति मंत्रेण किंचित्क्रव्यादां

सं०प्र० शं नैर्ऋत्यां दिशिपरित्यज्यततॐ अग्निं दूतम्पुरो दधे हव्यवाहमुपब्रुवे॥ देवाँऽआसादयादिह १इति मंत्रेणात्माभि
५१ मुखं विटनामाग्निं स्थापयेत् ॥ ततोऽग्न्यानीतपात्रे साक्षतोदकं निषिच्य आचार्योऽग्नेर्दक्षिणतः परिस्तरणभूमिं
त्यक्त्वा ब्रह्मणे आसनं दत्त्वा तदुपरि प्रागग्रान्कुशानास्तीर्य पुष्पचंदनतांबूलद्रव्यवासांस्यादाय देशकालौ
स्मृत्वा अद्यकर्तव्यसंस्कारलोपप्रायश्चित्तहोमकर्माणि कृताकृतावेक्षणरूपब्रह्मकर्म्म कर्तुममुकगोत्रममुकश
र्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलद्रव्यवासोभिर्ब्रह्मत्वेन त्वामहं वृणे ॥ ॐ वृतोस्मीति प्रतिवचनानंतरम्
ॐ यथाविहितं कर्म कुरु इति प्रार्थयेत् ॐ करवाणीति प्रतिवचनम् । एवमेव होतारं वृणुयात् ॥ ततो ब्रह्माण
कां० ३ मग्निप्रदक्षिणक्रमेणानीय कल्पितासने उपवेशयेत् ॥ [ तदभावे पंचाशत्कुशनिर्मितं वा स्थापयेत् ॥ ] ततः
प्रणीतापात्रं पुरतः कृत्वा वारिणाऽऽपूर्य्य कुशत्रयेणाच्छाद्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्या
त् ॥ ततः परिस्तरणम् ॥ बर्हिषश्चतुर्थभागमादाय चतुर्भिश्चतुर्भिर्दर्भदलैरुत्तराग्रैराग्नेयादीशानांतं प्राच्यां १ प्राग
ग्रैर्नैर्ऋत्यादाग्नेयांतं दक्षिणस्याम् २ उदगग्रैर्नैर्ऋत्याद्वायव्यांतं प्रतीच्याम् ३ प्रागग्रैर्वायव्यादीशानांतमुदीच्यां

च परिस्तरेत् ॥ ४ ॥ ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयम् ३ पवित्रकरणार्थं साग्रमनं तर्गर्भकुशपत्रद्वयम् २ प्रोक्षणीपात्रम् १ आज्यस्थाली १ संमार्जनकुशाः पंच । उपयमनकुशाः सप्त । समिधस्तिस्रः पालाश्यः प्रादेशमात्राः । स्रुवः खादिरो हस्तमात्रः । आज्यं गव्यम् । पूर्णपात्रम् १ दक्षिणा ॥ एतानि पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयानि ॥ ततः पवित्रच्छेदनैः पवित्रे च्छित्त्वा सपवित्रहस्तेन प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निक्षिप्य अनामिकांगुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुत्पवनम् ॥ प्रोक्षणीपात्रस्य सव्यहस्ते करणम् । अनामिकांगुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुद्दिंगनम् । प्रणीताजलेन प्रोक्षणीप्रोक्षणम् । प्रोक्षणीजलेन आज्यस्थाल्यादीनि पूर्णपात्रपर्यंतानि क्रमेणैकैकशः प्रोक्ष्य असंचरे प्रणीताग्न्योर्मध्ये प्रोक्षणीपात्रं निधाय आसादितमाज्यमाज्यस्थाल्यां प्रक्षिप्य तत्राज्यं ब्रह्माधिश्रित्य ज्वलदुल्मुकं प्रदक्षिणमाज्यस्योपरि समंताद्भ्रामयित्वाग्नौ प्रक्षेपः । ततो दक्षिणपाणिना अधोमुखं स्रुवमग्नौ तापयित्वा सव्ये पाणौ कृत्वा दक्षिणेन सम्मार्जनाग्रैर्मूलतोऽग्रपर्यंतं मूलैरग्रमारभ्य अधस्तान्मूलपर्यंतं

सं०प्र० संमृज्य प्रणीतोदकेनाभिषिच्य पुनः प्रताप्य दक्षिणतो निदध्यात् ॥ तत आज्यमुत्थाप्य प्रदक्षिणक्रमेणाग्नेः
५२ पश्चिमतः स्थापयेत् ॥ ततः पवित्राभ्यामाज्यमुत्पूय अवलोक्य तस्मादपद्रव्यनिरसनम् । पुनः प्रोक्षण्युत्प
वनम् । तत उपयमनकुशान्वामहस्ते कृत्वा उत्तिष्ठन्प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिध
स्तिस्रः प्रक्षिपेत् ॥ तत उपविश्य प्रोक्षण्युदकेन सपवित्रेणाग्निमीशानादिप्रदक्षिणक्रमेण उदकपर्यंतं परिषिच्य
दक्षिणं जान्वाच्य ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहुयात् ॥ अनंतरं स्रुवावस्थितहुतशेषघृतस्य
प्रोक्षणीपात्रे प्रक्षेपः॥अथ होमः॥[अग्नेरुत्तरभागे]ॐप्रजापतये स्वाहा इदं प्रजापतये न मम॥[अग्नेर्दक्षिणभागे]
कां० ३ ॐ इंद्राय स्वाहा । इदमिंद्राय न मम ॥ [ इत्याघारौ ] [ मध्ये समिद्धतमे ] ॐ अग्नये स्वाहा इदमग्नये न
मम ॥ ॐ सोमाय स्वाहा इदं सोमाय न मम ॥ [ इत्याज्यभागौ ] अथ संस्कारलोपप्रायश्चित्तहोमः ॥ देश
कालौ स्मृत्वा अस्य कुमारस्य गर्भाधानपुंसवनसीमंतोन्नयनजातकर्मनामकर्मसूर्यावलोकननिष्क्रमणोपवेश
नान्नप्राशनचौलसंस्काराणां लोपनिमित्तप्रत्यवायपरिहारार्थं श्रीपरमेश्वरप्रीत्यर्थं प्रतिसंस्कारमेकैकां भूर्भुवः

स्वः स्वाहेतिव्यस्तसमस्तव्याहृत्याज्याहुतिं होष्यामि । इति संकल्प्य अतीतसंस्कारसमसंख्यया व्यस्तसम
स्तव्याहृत्याज्याहुतीर्जुहुयात् ॥ तद्यथा ॥ ॐ भूःस्वाहा इदमग्नये १ ॐ भुवः स्वाहा इदं वायवे २ ॐ स्वः
स्वाहा इदं सूर्याय ३ ॐ भूर्भुवः स्वः स्वाहा इदं प्रजापतये ॥ ४ ॥ इति व्याहृत्या चतस्र आहुतीर्जुहुयात् ॥
ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः॥यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांꣳसि
प्रमुमुग्ध्यस्मत्स्वाहा ॥ इदमग्नीवरुणाभ्यां न मम ॥ १ ॥ ॐ स त्वन्नोऽअग्नेवमो भवोतीनेदिष्ठो अस्या उषसो
व्युष्टौ ॥ अव यक्ष्व नो वरुणꣳरराणो वीहि मृडीकꣳसुहवो नऽएधि स्वाहा ॥ इदमग्नीवरुणाभ्यां न मम ॥ २ ॥
ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्त्वमया असि ॥ अया नो यज्ञं वहास्ययानो धेहि भेषजꣳस्वाहा ॥
इदमग्नये अयसे न मम ॥ ३ ॥ ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः ॥ तेभिर्नो अद्य
सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काःस्वाहा ॥ इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्के
भ्यश्च न मम ॥ ४ ॥ ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳ श्रथाय ॥ अथावयमादित्यव्रते तवाना

सं० प्र० गसो आदितये स्याम स्वाहा ॥ इदं वरुणायादित्यायादितये न मम ॥ ५ ॥ इत्येकसंस्कारलोपप्रायश्चित्तहोमः॥
५३ एवं दशवारं हुत्वा सर्वहोमांते ॥ पुनः ॐ । भूः स्वाहा इदमग्नये १ ॐ भुवः स्वाहा इदं वायवे २ ॐ स्वः स्वाहा
इदं सूर्याय ३ ॐ त्वन्नोऽअग्ने० ४ स त्वन्नोऽअग्ने० ५ अयाश्चाग्ने० ६ ये ते शतं० ७ उदुत्तमं० ८ ॐ प्रजापतये
स्वाहा इदं प्रजापतये न मम ९ ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम १० इति स्विष्टकृदंता
दशाहुतयः ॥ ततः संस्रवप्राशनम् ॥ आचमनं च ॥ ब्रह्मणे पूर्णपात्रदानम् ॥ ॐ अद्य संस्कारलोपप्रायश्चित्त
होमकर्मणि ब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतं सदक्षिणाकममुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे
कां० ३ दक्षिणात्वेन तुभ्यमहं संप्रददे । ॐ स्वस्तीति प्रतिवचनम् ॥ एवं होत्रेपि दक्षिणां दद्यात् ॥ ततो ब्रह्मग्रंथिवि
मोकः ॥ ॐ सुमित्रिया नऽआप ओषधयः संतु ॥ इति पवित्राभ्यां प्रणीताजलेन यजमानशिरः संमृज्य । ॐ
दुर्म्मित्रियास्तस्मै संतु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ इत्यैशान्यां प्रणीतान्युब्जीकरणम् ॥ ततः स्तरणक्र
मेण बर्हिरुत्थाप्याज्येनाभिघार्य ॐ देवागातुविदो गातुं वित्वा गातुमित मनसस्पतइमं देवयज्ञं स्वाहा वाते

धाः स्वाहा ॥ इति बर्हिर्होमः ॥ ततस्त्र्यायुषकरणम् ॥ एवं होमं समाप्य गोदानं कुर्यात् ॥ तद्यथा ॥ देशकालौ स्मृत्वा अस्य कुमारस्य गर्भाधानादीनां चौलांतानां संस्काराणां लोपनिमित्तप्रत्यवायपरिहारार्थं प्रतिसंस्कारं पादकृच्छ्रं प्रायश्चित्तं चौलस्यार्धकृच्छ्रं बुद्धिपूर्वकलोपे प्रतिसंस्कारमर्धकृच्छ्रं चूडायाः कृच्छ्रं प्रायश्चित्तं तत्प्र त्याम्नायगोनिष्क्रयीभूतयथाशक्तिरजतद्रव्यममुकगोत्रायामुकशर्मणे ब्राह्मणाय दातुमहमुत्सृजे ॥ इति संकल्प्य निष्कं निष्कार्धं निष्कपादं निष्कपादार्धं वा रजतं गोमूल्यं ब्राह्मणाय दद्यात् न तु न्यूनम् । [ अष्टगुं जामाषरीत्या चत्वारिंशन्माषो निष्क इत्युक्तम् ] एवं प्रायश्चित्तं कृत्वा पुनर्जातकर्मादिसंस्काराः कार्या न कार्या वा इति पक्षद्वयम् ॥ " प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै ॥ कार्यमित्येक आचार्या नेत्यन्येऽपि विपश्चितः ॥ " इति वचनात् ॥ इति संस्कारलोपप्रायश्चित्तविधानं समाप्तम् ॥ ॥ अथोपनयनकालो व्रात्य प्रायश्चित्तविधानं च ॥ तत्र मनुः–[ अध्या० २ श्लो० ३६ ] गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ॥ गर्भा देकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥ १ ॥ ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पंचमे ॥ राज्ञो बलार्थिनः षष्ठे वैश्य

स्येहार्थिनोऽष्टमे ॥२॥ आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते ॥ आद्वाविंशात्क्षत्रबंधोराचतुर्विंशतेर्विशः ॥३॥ अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ॥ सावित्रीपतिता व्रात्या भवंत्यार्यविगर्हिताः ॥ ४ ॥ [ तत्रैव अ० ११ श्लो० १९२ ] येषां द्विजानां सावित्री नानूच्येत यथाविधि ॥ तांश्चारयित्वा त्रीन्कृच्छ्रान्यथाविध्युपनाययेत् ॥ १ ॥ अथ व्रात्यप्रायश्चित्तप्रयोगः ॥ पूर्वोक्तोपनयनकालातिक्रमे मनूक्तांस्त्रीन्कृच्छ्रान्कृत्वा तदशक्तौ प्रतिकृच्छ्रं गां दत्त्वा तदलाभे तन्मूल्यं सुवर्णं वा रजतं निष्कमेकमर्द्धं तदर्धं वा द्वादशब्राह्मणभोजनं वा अयुतगायत्रीजपं वा गायत्र्या तिलाज्यसहस्रहोमं वा शक्त्यपेक्षयान्यतमं विधायोपनयनं कार्यम् ॥ ॥ तत्र प्रकारः ॥ उपनयनात्प्राक्यथाशक्त्येकद्वित्रिर्वा उपवासंविधाय प्रायश्चित्तदिने प्रातर्नद्यादौ स्नात्वा अहतवाससी परिधाय धृततिलकः यथाविधि पंचगव्यं कृत्वा प्रणवेन कुशैर्दशवारमालोड्य दर्भकूर्चेन ॥ “ ॐ यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके ॥ प्राशनात्पंचगव्यस्य दहत्यग्निरिवेंधनम् ॥ १ ॥ ” इति मंत्रेण पंचगव्यं प्राश्य आचामेत् ॥ ततो देशकालौ संकीर्त्य अमुकगोत्रोऽमुकशर्मा मम उपनयनमुख्यकालातिक्रांतैतावद्वर्षव्रात्यत्वज

नितदोषक्षयाय कृच्छ्रत्रयात्मकप्रायश्चित्तं तत्प्रत्याम्नायत्वेन प्रतिकृच्छ्रमेकैकां गां ब्राह्मणेभ्योऽहं संप्रददे । इति संकल्प्य धेनुत्रयं ब्राह्मणेभ्यो दद्यात् ॥ अतिकालातिक्रमे प्रतिवर्षं गां दद्यात् ॥ तदशक्तौ ममोपनयनमुख्यकाला तिक्रांतैतावद्वर्षव्रात्यत्वजनितदोषपरिहारार्थं कृच्छ्रत्रयात्मकप्रायश्चित्तप्रत्याम्नायधेनुत्रयमूल्यमिदमेतावत्सुवर्णं ब्राह्मणेभ्योऽहं संप्रददे । इति यथाशक्ति सुवर्णं वा निष्कपरिमितं रजतं तदर्द्धं वा दद्यात् ॥ अथवा । कृच्छ्र त्रयात्मकप्रायश्चित्तप्रत्याम्नायत्वेन प्रतिकृच्छ्रमयुतं गायत्र्या जपं करिष्ये । इत्ययुतत्रयगायत्रीजपं स्वयं ब्राह्मणद्वारा वा कारयेत् ॥ अथवा । कृच्छ्रत्रयात्मकप्रायश्चित्तप्रत्याम्नायत्वेन गायत्र्या त्रिसहस्रतिला ज्याहुतीर्होष्यामीति गायत्र्या त्रिसहस्रतिलाज्याहुतीर्दद्यात् ॥ अथवा । ममोपनयनमुख्यकालातिक्रांते तावद्वर्षव्रात्यत्वजनितदोषपरिहारार्थं श्रीपरमेश्वरप्रीत्यर्थं कृच्छ्रत्रयात्मकप्रायश्चित्तप्रत्याम्नायत्वेनैतावतो ब्राह्मणान्भोजयिष्ये । इति संकल्प्य षट्त्रिंशद्ब्राह्मणान्भोजयेत् ॥ इति पूर्वदिने प्रायश्चित्तकृत्यम् ॥

॥ ॥ अथोपनयनप्रयोगः ॥ ॥ तत्रोदगयने ज्योतिःशास्त्रोक्तशुभमासे शुक्लपक्षे शुभे दिने सुमुहूर्त्ते उपन

 यनं कर्तुं तत्पूर्वेद्युः यजमानः पत्नीकुमाराभ्यां सह मंगलस्नानं कृत्वा अहतवाससी परिधायालंकृत्य धृतति
 लको बहिःशालायां शुभासने प्राङ्मुख उपविश्य स्वदक्षिणतः पत्नीं तद्दक्षिणतः संस्कार्यं चोपवेश्य धृतपवित्र
पाणिराचांतः प्राणानायम्य देशकालौ स्मृत्वा स्वस्योपनेतृत्वाधिकारसिद्ध्यर्थमेककृच्छ्रात्मकप्रायश्चित्तं तत्प्र
त्याम्नायगोनिष्क्रयीभूतयथाशक्तिरजतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दातुमहमुत्सृजे । इति संकल्प्य
रजतद्रव्यं ब्राह्मणाय दद्यात् ॥ ततः कुमारेणापि देशकालकीर्तनांते मम कामचारकामवादकामभक्षणादि
दोषपरिहारार्थं कृच्छ्रत्रयात्मकप्रायश्चित्तप्रत्याम्नायगोनिष्क्रयीभूतरजतदानपूर्वकं दशसहस्रं द्वादशाधिकस
 हस्रं वा गायत्रीजपं ब्राह्मणद्वारा अहमाचरिष्ये । इति कारयित्वा उपनयनं कार्यम् ॥ यजमानः पुनर्देशकालौ
संकीर्त्य अस्य कुमारस्य द्विजत्वसिद्ध्यै वेदाध्ययनाधिकारसिद्ध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं च उपनयनं श्वः वा
अद्य करिष्ये । तदंगत्वेन गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं चाद्य करिष्ये ॥ इति च
संकल्प्य गणपतिपूजनादिनांदीश्राद्धांतं पूर्ववत्कुर्यात् ॥ [ यदा तद्दिने ग्रहयज्ञं करोति तदा । ॐ अस्य कुमा

रस्य ग्रहानुकूलतासिद्ध्यर्थं ग्रहयज्ञं करिष्ये। इति वाक्यं कृत्वा ग्रहमखः कार्यः ॥ ग्रहमखप्रयोगस्तु मत्कृत शान्तिप्रकाशे द्रष्टव्यः ] ततः कुमारपिता पुनर्देशकालौ संकीर्त्य अस्य कुमारस्य द्विजत्वसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गायत्र्युपदेशं कर्तुं तत्प्राच्यांगभूतं वपनं करिष्ये। इति वपनं कारयित्वा ततः स्नातमहतवस्त्रं बद्धशिखं कृतमंगलतिलकं बटुं कुर्यात् ॥ पुनर्देशकालौ स्मृत्वा अस्य कुमारस्य उपनयने अधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं त्रीन्ब्राह्मणान्भोजयिष्ये। इति संकल्प्य अनुच्छिष्टपाकेन ब्राह्मणत्रयभोजनम् ॥ तत्पंक्तौ मुंडितशिराः सशिखः सुस्नातः कुमारोऽपि भुंजीत ॥ भोजनानंतरं पुनः कुमारं स्नापयित्वा कुमारंपिता बहिः शालायां वेद्युपरि शुभासने उपवेश्य । देशकालौ स्मृत्वा अस्य कुमारस्योपनयनांगभूतमग्निप्रतिष्ठापनं करिष्ये। इति संकल्प्य हस्तमात्रपरिमितं चतुरस्रं स्थंडिलं कृत्वा कुशैः परिसमुह्य तानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेन प्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणानामिकांगुष्ठाभ्यां मृदमुद्धृत्य तं देशं जलेनाभ्युक्ष्य नवीनकांस्यपात्रेणाग्निमादाय नैर्ऋत्यां किंचित्क्रव्यादांशं त्यक्त्वा स्वाभि

मुखं निदध्यात् ॥ एमवाग्निं प्रतिष्ठाप्य पर्युप्तशिरसमलंकृतं कुमारमाचार्यपुरुषा आचार्यसमीपमानयंति । तत
आचार्यः । आनीतं कुमारं पश्चादग्नेः स्वस्य दक्षिणतोऽवस्थाप्य ब्रह्मचर्यमागामिति ब्रूहीति कुमारं प्रतिवदति ।
ब्रह्मचर्यमागामिति कुमारः प्रतिब्रूयात्॥ब्रह्मचार्यसानीति ब्रूहीत्याचार्येणोक्तोब्रह्मचार्यसानीति माणवको ब्रूयात्॥
अथाचार्यो माणवकस्य कटिसूत्रं बद्धा कौपीनं परिधापयति ॥ तत्र मंत्रः ॥ ॐ येनेंद्राय बृहस्पतिर्वासः पर्यद
धादमृतम् ॥ तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चसे ॥ १ ॥ आचमनम् ॥ तत आचार्यो माणव
कस्य कटिप्रदेशे मेखलां प्रदक्षिणं त्रिर्वेष्टयित्वा यथोक्तलक्षणां यथाप्रवरग्रंथियुतां बध्नाति । तत्र मंत्रः ॥ ॐ इयं
 दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती म आगात् ॥ प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखले
यम् ॥ १ ॥ युवा सुवासाः परिवीत आगात्सऽउ श्रेयान्भवति जायमानः ॥ तं धीरासः कवयऽउन्नयंति स्वाध्यो
३ मनसा देवयन्तः॥इति वा मंत्रं पठति॥आचमनम् । तत आचाराद्यज्ञोपवीतसहितभांडाष्टकदानम् ॥ देशकालौ
स्मृत्वा मम द्विजत्वसिद्धिवेदाध्ययनाधिकारार्थं श्रौतस्मार्तकर्माधिकारसिद्ध्यर्थं यज्ञोपवीतधारणाधिकारार्थं

श्रीसवितृसूर्यनारायणप्रीत्यर्थमिदंभांडाष्टतयं सयज्ञोपवीतं सदक्षिणं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे ॥ इति संकल्प्य ब्राह्मणेभ्यो दद्यात् ॥ अथाचार्यो यज्ञोपवीतमभिमंत्रयेत् । तत्प्रकारः ॥ ॐ आपो हि ष्ठा मयोभुवस्तानऽऊर्जे दधातन ॥ महे रणाय चक्षसे ॥ १ ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः ॥ उशतीरिव मातरः ॥ २ ॥ तस्मा अरंगमाम वो यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च नः ॥ ३ ॥ इति तिसृभिर्ऋग्भिरुपवीतं प्रक्षाल्य ॐ ब्रह्म जज्ञानं प्रथमम्पुरस्ताद्विसीमतः सुरुचो वेनऽआवः ॥ स बुध्न्याऽउपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ १ ॥ ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्य पाँसुरे ॥ २ ॥ ॐ नमस्ते रुद्रमन्यवऽउतो तऽ इषवे नमः ॥ बाहुभ्यामुत ते नमः ॥ ३ ॥ इति तिसृभिर्ऋग्भिरुपवीते अंगुष्ठे भ्रामयेत् ॥ ततो यज्ञोपवीतं पलाशपत्रे निधाय नवतंतुषु देवता विन्यसेत् ॥ तद्यथा ॥ ॐकारं प्रथमतंतौ न्यसामि १ अग्निं द्वितीयतंतौ न्यसामि २ नागांस्तृतीयतंतौ न्यसामि ३ सोमं चतुर्थतंतौ न्यसामि ४ इंद्रं पंचमतंतौ न्यसामि ५ प्रजापतिं षष्ठतंतौ न्यसामि ६ वायुं सप्तमतंतौ न्यसामि ७ सूर्यमष्टमतंतौ न्यसामि ८ विश्वान्दे

१ पितॄन्पंचमतंतौ न्यसामि इ० पा० ।

सं० १० वान्नवमतंतौ न्यसामि ॥९॥ इति तंतुदेवता न्यस्य ॐतंतुदेवताभ्यो नमः। इति नाममंत्रेण षोडशोपचारैः संपूज्य
५७ तत उपवीतं करसंपुटे निधाय दशगायत्र्याभिमंत्र्य " उपयाम गृहीतोसि सावित्रोसि च नोधाश्च नोधाऽअसि च
नो मयि धेहि॥जिन्वं यज्ञंजिन्वयज्ञपतिम्भगाय देवाय त्वा सवित्रे ॥१॥इति सूर्याय प्रदर्शयेत्॥ततो यज्ञोपवीतं परि
दधाति माणवकः॥ तत्र मंत्रः ॥ यज्ञोपवीतमिति मंत्रस्य परमेष्ठी ऋषिर्लिंगोक्ता देवता त्रिष्टुप्छंदो यज्ञोपवीतपरि
धाने विनियोगः॥ ॐयज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्॥ आयुष्यमग्र्यं प्रतिमुंच शुभ्रं यज्ञोपवीतं
बलमस्तु तेजः॥ १ ॥ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥ २ ॥ इत्यनेन मंत्रेण माणवको
कां० ३ दक्षिणहस्तेनोर्ध्वकृतेन दक्षिणकरमध्ये यज्ञोपवीतं प्रक्षिप्य वामेन वामस्कंधं धारयेत्॥ तत आचमनम्॥ तत
स्तथैव तूष्णीं माणवकस्य यथोक्तमजिनमुत्तरीयं कारयति॥ तत आचार्यो माणवकाय दंडं प्रयच्छति।
माणवकश्च। ॐ यो मे दंडः परापतद्वैहायसोधिभूम्याम्॥ तमहं पुनराददाम्यायुषे ब्रह्मणे ब्रह्मवर्चसाय॥ १ ॥
इत्यनेन मंत्रेण तं प्रतिगृह्णात्युच्छ्रयति। अथाचार्यः स्वकीयमंजलिं जलेन पूरयित्वा तेन जलेनांजलिस्थेन

माणवकस्यांजलिं पूरयति। ॐ आपो हि ष्ठा० १ यो वः शिव० २ तस्मा ऽअरं ग० ३ इति त्र्यृचेन ॥ ततो गुरुर्माणवकं प्रेषयति सूर्यमुदीक्षस्वेति। माणवकश्च प्रेषितः। ॐ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ इति मंत्रेण सूर्यमुदीक्षते ॥ तत आचार्यो माणवकस्य दक्षिणांसस्योपरि स्वं दक्षिणं हस्तं नीत्वा हृदयमालभते ॥ तत्र मंत्रः ॥ ॐ मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तं ते अस्तु ॥ मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम् ॥ १ ॥ अथाचार्यो माणवकस्य दक्षिणं हस्तं सांगुष्ठं गृहीत्वा को नामासीत्याह। एवं पृष्टः कुमारः अमुकशर्माहं भो ३ इति कुमार आह ॥ पुनराचार्यो माणवकं पृच्छति। कस्य ब्रह्मचार्यसीति। भवत इति कुमार आह ॥ पुनराचार्यो भाषते। इंद्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यः। अमुकशर्मन् ॥ अथैनं कुमारं भूतेभ्यः परिददात्याचार्यः ॥ तत्र मंत्रः ॥ ॐ प्रजापतये त्वा परिददामि। इति प्राच्याम् १ ॐ देवाय त्वा सवित्रे परिददामि। इति दक्षिणस्याम् २ ॐ अद्भ्यस्त्वौषधीभ्यः परिददामि।

सं०प्र० इति प्रतीच्याम् ३ ॐ द्यावापृथिवीभ्यां त्वा परिददामि । इत्युदीच्याम् ४ ॐ विश्वेभ्यस्त्वा देवेभ्यः
५८ परिददामि । इत्यधः ५ ॐ सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै इत्यूर्द्ध्वं प्रणमेत् ॥ ६ ॥ ततः
कुमारः अग्निं प्रदक्षिणीकृत्य आचार्यस्योत्तरत उपविशति । आचार्यः । पुष्पचंदनतांबूलवासांस्यादाय
देशकालौ संकीर्त्य अद्यकर्तव्योपनयनहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्तुममुकगोत्रममुकश
र्म्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे । इति ब्रह्माणं वृणुयात् ॥ ॐ वृतोऽ
स्मीति प्रतिवचनम् ॥ पुनः पुष्पचंदनतांबूलवस्त्राण्यादाय । अद्यकर्त्तव्योपनयनहोमकर्मणि होतृत्वकर्म्म
कां० ३ कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्होतृत्वेन त्वामहं वृणे । इति होतारं
वृणुयात् ॥ ॐ वृतोऽस्मीति प्रतिवचनम् ॥ यथाविहितं कर्म्म कुरु । इत्याचार्येणोक्ते । ॐ करवाणीति प्रतिवच
नम् ॥ ततोऽग्नेर्दक्षिणतः शुद्धमासनं दत्त्वा तदुपरि प्रागग्रान्कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानीय ।
अत्र त्वं मे ब्रह्मा भवेत्यभिधाय भवामीति तेनोक्ते तदुपरि ब्रह्माणमुदङ्मुखमुपवेशयेत् ॥ ( तदभावे पंचाशत्कु

शनिर्मितं वा ब्रह्माणमुत्तराग्रं स्थापयेत् ) ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्यात् ॥ ततः परिस्तरणम् ॥ बर्हिषश्चतुर्थभागमादाय (अग्नेः परितः) चतुर्भिः कुशपत्रैः । उत्तराग्रैराग्नेयादीशानांतम् १ पूर्वाग्रैर्नैर्ऋत्यादाग्नेयान्तम् २ उत्तराग्रैर्नैर्ऋत्याद्वायव्यांतम् ३ पुनः पूर्वाग्रैर्वायव्यादीशानांतं च परिस्तरणं कार्यम् ॥ ४ ॥ ततोऽग्नेरुत्तरतः पश्चिमादिशि पवित्रच्छेदनार्थं कुशात्रयम् ३ पवित्रार्थं साग्रमन्तर्गर्भकुशपत्रद्वयम् २ प्रोक्षणीपात्रम् १ आज्यस्थाली १ संमार्जनार्थं कुशाः पंच ५ उपयमनकुशाः सप्त ७ समिधस्तिस्रः ३ स्रुवः १ आज्यं गव्यं तंडुलपूर्णपात्रम् १ दक्षिणा वरो वा । एतानि पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयानि ॥ ततः पवित्रच्छेदनकुशैः पवित्रे छित्त्वा सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय अनामिकांगुष्ठाभ्यां गृहीतपवित्राभ्यां तज्जलं किंचित्रिरुत्क्षिप्य प्रणीतोदकेन प्रोक्षणीं त्रिरभिषिच्य प्रोक्षणीजलेनासादितवस्तुसेचनं कृत्वा । अग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् ॥ आज्यस्थाल्यामाज्यनिर्वापः । अधिश्रयणम् ॥ ततः कुशं प्रज्वाल्य आज्यस्योपरि

सं०प्र० प्रदक्षिणं भ्रामयित्वा वह्नौ तत्प्रक्षिप्य अधोमुखस्य स्रुवस्य त्रिः प्रतपनम् । संमार्जनकुशानामग्रैरंतरतो मूलै
५९ र्बाह्यतः स्रुवं संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिः प्रतप्य दक्षिणतो निदध्यात् ॥ तत आज्यमग्नेरवतार्य त्रिः
प्रोक्षणीवदुत्पूय अवेक्ष्य सत्यपद्रव्ये तन्निरसनं पुनः प्रोक्षण्युत्पवनम् ॥ तत उत्थाय उपयमनकुशान्वामहस्ते
कृत्वा प्रजापतिं मनसा ध्यात्वा तूष्णीं घृताक्तास्तिस्रः समिधः प्रक्षिपेत् ॥ उपविश्य सपवित्रप्रोक्षण्युदकेन
प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य प्रणीतापात्रे पवित्रे निधाय पातितदक्षिणजानुः ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ
स्रुवेणाज्याहुतीर्जुहोति । तत्र तत्तदाहुत्यनंतरं स्रुवावस्थितघृतशेषस्य प्रोक्षणीपात्रे प्रक्षेपः ॥ अथाज्यहोमः ॥
कां० ३ ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ॥ १ ॥ ( इति मनसा ) ॐ इंद्राय स्वाहा इदमिंद्राय न मम॥२॥
( इत्याघारौ )ॐ अग्नये स्वाहा इदमग्नये न मम॥३॥ॐ सोमाय स्वाहा इदं सोमाय न मम॥४॥(इत्याज्यभागौ)
ॐ भूः स्वाहा । इदमग्नये न मम ॥५॥ ॐ भुवः स्वाहा । इदं वायवे न मम ॥ ६ ॥ ॐ स्वः स्वाहा । इदं सूर्याय
न मम ॥ ७ ॥ ( एता महाव्याहृतयः । ) ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः ॥ यजि

ष्ठो वह्नितमः शोशुचानो विश्वा द्वेषां ँसि प्रमुमुग्ध्युस्मत्स्वाहा ॥ इदमग्नीवरुणाभ्यां न मम ॥ ८ ॥ ॐ स त्वन्नोऽअग्ने वमो भवोती नेदिष्ठोऽअस्या उषसो व्युष्टौ ॥ अवयक्ष्वनो वरुणꣳररांणो वीहि मृडीकꣳसुहवों नऽ एधि स्वाहा ॥ इदमग्नीवरुणाभ्यां न मम ॥ ९ ॥ ॐ अयाश्चाग्नेऽस्यनभिशस्तिपाश्चसत्यमित्त्वमया असि ॥ अया नो यज्ञं वहास्ययानो धेहि भेषजꣳस्वाहा ॥ इदमग्नये न मम ॥ १० ॥ ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः ॥ तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥ इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ ११ ॥ ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳश्रथाय ॥ अथावयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा ॥ इदं वरुणायादित्यायादितये च न मम ॥१२॥ [एताः सर्वप्रायश्चित्तसंज्ञकाः] ॐप्रजापतये स्वाहा। इदं प्रजापतये न मम ॥१३॥ ॐ अग्नये स्विष्टकृते स्वाहाइदमग्नये स्विष्टकृते न मम॥१४॥[एवमाघाराद्याः स्विष्टकृतंताश्चतुर्दशाज्याहुतीर्जुहुयात] ततःसंस्रवप्राशनमाचमनं च॥ततो ब्रह्मणे पूर्णपात्रदानम्॥देशकालौ संकीर्त्य अद्य कृतैतदुपनयनहोमकर्म्मणि कृतै

सं०प्र० तदुपनयनहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतं सदक्षिणाकममुकगो
६० त्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणात्वेन तुभ्यमहं संप्रददे। इति ब्रह्मणे दक्षिणां दद्यात्॥ॐ स्वस्तीति प्रति
वचनम्॥ततो ब्रह्मग्रंथिविमोकः॥ ॐ सुमित्रिया नऽ आप ओषधयः संतु। इति पवित्राभ्यां प्रणीताजलेन शिरः
संमृज्य।ॐ दुर्मित्रियास्तस्मै संतु यो स्मान्द्वेष्टि यं च वयं द्विष्मः॥ इत्यैशान्यां प्रणीतान्युब्जीकरणम्। अग्नौ
पवित्रप्रतिपत्तिः॥ततः स्तरणक्रमेण बर्हिरुत्थाप्याज्येनाभिधार्य हस्तेनैव जुहुयात्। तत्र मंत्रः॥ ॐ देवा गातु
विदो गातुंवित्वा गातुमित॥मनसस्पतऽइमंदेवयज्ञꣳ स्वाहा वातेधाः स्वाहा॥१॥इति बर्हिर्होमः॥ अथाचार्य एनं
कां० ३ ब्रह्मचारिणं संशास्ति॥ ॐ ब्रह्मचार्यसीत्याचार्यो वदति। ॐ असानीति ब्रह्मचारी। ॐ अपोशानेत्याचार्यः।
ॐ अशनानीति ब्रह्मचारी। ॐ कर्म कुरु इत्याचार्यः।ॐ करवाणीति ब्रह्मचारी।ॐ मादिवा सुषुप्था इत्या
चार्यः। ॐ न स्वपानीति ब्रह्मचारी।ॐ वाचं यच्छ इत्याचार्यः। ॐ यच्छानि इति ब्रह्मचारी। ॐ समिधमा
धेहीत्याचार्यः। ॐ आदधानीति ब्रह्मचारी। ॐ अपोशान इत्याचार्यः। ॐ अशनानि इति ब्रह्मचारी॥

अथाचार्योऽग्नेरुत्तरतो दक्षिणतो वा प्रत्यङ्मुखाय उपविष्टाय पादोपसंग्रहणपूर्वकमुपसन्नाय आचार्यं समीक्ष माणाय स्वयमप्याचार्येण समीक्षिताय बटवे ॐकारव्याहृतिपूर्वकं प्रथमं पादम् । द्वितीयमर्द्धर्चशः । तृतीयं सर्वामृचं च पठन् सावित्रीमुपदिशेत् ॥ तत्र मंत्रः ॥ ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ १ ॥ एवं त्रिवारं ब्रह्मचारिणा सह पठेत ॥ अथ माणवक आचार्यस्य दक्षिणदिशि अग्नितः पश्चिमोपविष्टो घृताक्तशुष्कनिर्षिद्धेतरेंधनं दक्षिणहस्तेन जुहुयात् ॥ तत्र मंत्राः ॥ ॐ अग्ने सुश्रवः सुश्रवसं माकुरु ॥ १ ॥ ॐ यथा त्वमग्ने सुश्रवः सुश्रवाऽअसि ॥ २ ॥ ॐ एवं माथंसुश्रवः सौश्रवसं कुरु ॥ ३ ॥ ॐ यथा त्वमग्ने देवानां यज्ञस्य निधिपाऽअसि ॥ ४ ॥ ॐ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ॥ ५ ॥ इत्येतैः पंचभिर्मंत्रैः प्रतिमंत्रमिंधनं समाचारात् आरण्यशुष्कगोमयखंडान्वा जुहुयात् ॥ ततः प्रदक्षिणमग्निं वारिणा पर्युक्ष्य उत्थाय स्वप्रादेशमितां घृताक्तपलाशसमिधमादाय तिष्ठन् । ॐ अग्नये समिधमाहार्षं बृहते जातवेदसे ॥ यथा त्वमग्ने समिधा समिध्यस एवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन

सं०प्र० समिंधे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासꣳ
६१ स्वाहा ॥ १ ॥ इत्यनेन मंत्रेणोक्तलक्षणामेकां समिधं जुहुयात् ॥ एवं समिदंतरद्वयं पुनर्जुहुयात् ॥
अथोपविश्य पूर्ववत् । ॐ अग्ने सुश्रवः सुश्रवसं मा कुरु ॥ १० ॥ ॐ यथा त्वमग्ने सुश्रवः सुश्रवाऽ
असि २ ॐ एवं माꣳसुश्रवःसौश्रवसं कुरु ॥ ३ ॥ ॐ यथा त्वमग्ने देवानां यज्ञस्य निधिपाऽ असि ४
ॐ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ॥ ५ ॥ इति पंचभिर्मंत्रैरग्निं संधुक्ष्य ततः प्रदक्षिणमग्निं पर्युक्ष्य
तूष्णीं पाणी प्रतप्य मुखं प्रतिमंत्रांतेऽवमृशति ॥ ॐ तनूपाऽ अंग्नेसि तुन्वम्मे पाहि ॥ १ ॥ ॐ आयुर्दाऽ
कां० ३ अंग्नेऽस्यायुर्मे देहि ॥ २ ॥ ॐ वर्च्चोदाऽ अंग्नेऽसु वर्चो मे देहि ॥ ३ ॥ ॐ अग्ने यन्मे तन्वाऽऊनन्तन्मऽ आ
पृण ॥ ४ ॥ ॐ मेधां मे देवः सविताऽ आदधातु ॥ ५ ॥ ॐ मेधां मे देवी सरस्वती आदधातु ॥ ६ ॥ ॐ मेधां
मेऽश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ ७ ॥ इत्येते मुखमार्जनमंत्राः ॥ ततः शिष्टाचारात् ॐ अंगानि च मऽआ
प्यायंताम् १ इति मंत्रेण शिरःप्रभृतिपादांतसर्वांगालंभनम् ॥ १ ॥ ततो दक्षिणहस्ताग्रेण । ॐ वाक्च मऽ

आप्यायताम् इति मुखालंभनम् ॥ २ ॥ ॐ प्राणश्च मऽ आप्यायताम् इति नासिकयोरालंभनम् ॥ ३ ॥ ॐ चक्षुश्च मऽ आप्यायताम् इति चक्षुषी युगपत् ॥ ४ ॥ ॐ श्रोत्रं च मऽआप्यायताम् । इति श्रोत्रे ॥ ५ ॥ ॐ यशो बलं च मऽआप्यायताम् । इति बाह्वोरुपस्पर्शनम् । ॥ ततस्त्र्यायुषकरणम् ॥ दक्षिणकरानामिका गृहीतभस्मना । ॐ त्र्यायुषं जमदग्नेः । इति ललाटे ॥ ॐ कश्यपस्य त्र्यायुषम् । इति ग्रीवायाम् ॥ ॐ यद्देवेषुं त्र्यायुषम् । इति दक्षिणांसे ॥ ॐ तन्नोऽअस्तु त्र्यायुषम् । इति हृदि ॥ इति चतुर्भिर्मंत्रैस्त्र्यायुष्याणि कुरुते॥ ततो व्यस्तपाणिभ्यां पृथिवीं स्पृशन्नभिवादनं कुर्यात् ॥ तत्र प्रकारः ॥ अमुकगोत्रोऽमुकप्रवरान्वितः अमुकशर्माहं भो वैश्वानर त्वामभिवादयामि । इति त्रिः ३ अनेनैव क्रमेण संबोध्य वरुणमभिवाद्य आचार्यं तथैवाभिवादयेत् ॥ आयुष्मान्भव सौम्येत्याचार्यो ब्रूयात् ॥ [ याज्ञवल्क्यः–दक्षिणं पादमालभ्य पाणिना दक्षिणेन च ॥ सव्येन सव्यं विष्टभ्य अभिवादनकर्मणि ॥ १ ॥ ] अथ भिक्षाचर्यचरणम् ॥ भिक्षापात्रमादाय प्रथमं मातुः सकाशात् ॥ ॐ भवति भिक्षां देहि । इति ब्राह्मणो भिक्षेत् [ भिक्षां भवति देहीति राजन्यः ॥ भिक्षां देहि भव

तीति वैश्यः ॥ ] इति भिक्षित्वा आचार्याय निवेदयेत् । भुंक्ष्व इत्याचार्यानुज्ञातो भिक्षां स्वीकुर्यात् । ततस्तथैव भिक्षांतरं याचित्वा मात्रे निवेदयेदिति संप्रदायः ॥ अथ ब्रह्मचारिणो यमनियमाः ॥ अधःशायी स्यात् ॥ अक्षारलवणाशी स्यात् ॥ दंडधारणं कर्तव्यम् ॥ गुरुशुश्रूषा कर्तव्या ॥ सायंप्रातर्भोजनार्थं भिक्षाचरणं कर्तव्यम् ॥ मधुमांसाशनं न कर्तव्यम् ॥ मज्जनं न कर्तव्यम् ॥ उद्धृतोदकेन स्नायात् ॥ स्त्रीणां मध्ये अवस्थानं न कर्तव्यम् ॥ अनृतं न वक्तव्यम् ॥ अदत्तं न गृह्णीयात् ॥ परिधृतवस्त्रं क्षालनं विना न दधीत ॥ भग्नं सुसहलँग्नितं विकृतं वस्त्रं न दधीत ॥ अस्तसमये भास्करावलोकनं न कुर्यात् ॥ शुष्कवादं परिवादादि च वर्जयेत् ॥ पर्युषितमन्नं मिस्सटान्नं च न भक्षयेत् ॥ कांस्यायसवंगमृत्पात्रे भोजनं तेन पानं च न कुर्यात् ॥ तांबूलभक्षणं न कुर्यात् ॥ अभ्यंगमक्ष्णोरंजनमपानच्छत्रादर्शं च वर्जयेत् ॥ वृक्षारोहणविषमभूमिलंघननग्नस्त्रीनिरीक्षणस्त्रीसंभोगव्यसनव्यावृत्तिरूपा ब्रह्मचारिणो नियमाः ॥ तद्दिने ब्रह्मचारी वाग्यतोऽहःशेषं स्थित एव गमयेत् ॥ ततः सायंसंध्यां कृत्वा तस्मिन्नेवाग्नौ पूर्ववत्पर्युक्षणपरिसमूहने कृत्वा वाचं विसृजेत् ॥

ततो देशकालौ स्मृत्वा अद्य कृतैतदुपनयनसंस्कारकर्मणः सांगतासिद्ध्यर्थं यथाशक्ति ब्राह्मणान्भोजयिष्ये। इति संकल्प्य पंचाशत्पंचविंशतिं वा द्वादशब्राह्मणान्भोजयेत् ॥ तत आचार्यादीन्गंधादिभिः संपूज्य तेभ्यश्च दक्षिणां दत्त्वा तैराशिषो गृह्णीयात् ॥ इति संस्कारप्रकाशे उपनयनप्रयोगः समाप्तः ॥ अथ वेदारंभप्रयोगः ॥ कृतनित्यक्रिय आचार्यः उपनयनोत्तरमनध्यायरहिते ज्योतिःशास्त्रोक्तशुभमुहूर्ते ब्रह्मचारिणमाहूय शुभासने स्वस्योत्तरत उपवेश्य आचम्य प्राणानायम्य देशकालौ स्मृत्वा अद्य असुकगोत्रोऽमुकशर्मा अस्य ब्रह्मचा रिणः सद्ब्रह्मताप्राप्तये श्रीपरमेश्वरप्रीत्यर्थं स्वशाखापूर्वकवेदारंभं करिष्ये। तदंगत्वेन गणपतिपूजनं स्वस्तिपु ण्याहवाचनं मातृकापूजनं नांदीश्राद्धं च करिष्ये ॥ इति च संकल्प्य सर्वं पूर्ववत्कृत्वा पुण्याहवाचनांते अपा पकः प्रीयतामिति पठेत् ॥ ततः आचार्यः देशकालौ स्मृत्वा अस्य ब्रह्मचारिणो वेदारंभांगभूतमग्निप्रतिष्ठा पनं करिष्ये। तदंगत्वेन संमार्जनोपलेपनादिकर्म्म करिष्ये ॥ इति च संकल्प्य हस्तमात्रपरिमितं चतुरस्रं स्थंडिलं कृत्वा कुशैः परिसमुह्य तानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेन प्रागग्रप्रादेशमात्रमुत्त

सं०प्र० रोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणानामिकांगुष्ठाभ्यां मृदमुद्धृत्य तं देशं जलेनाभ्युक्ष्य नवीनकांस्यपात्रे
६३ णाग्निमानीय स्वाभिमुखं निदध्यात् ॥ ततः पुष्पचंदनतांबूलवस्त्राण्यादाय देशकालौ स्मृत्वा अद्य कर्तव्य
वदारंभहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबू
लवासोभिर्ब्रह्मत्वेन त्वामहं वृणे इति ब्रह्माणं वृणुयात् । ॐ वृतोऽस्मीति प्रतिवचनम् ॥ पुनः पुष्पचं
दनतांबूलवासांस्यादाय अद्य कर्तव्यवेदारंभहोमकर्मणि होतृत्वकर्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मण
मेभिः पुष्पचंदनतांबूलवासोभिर्होतृत्वेन त्वामहं वृणे । ॐ वृतोऽस्मीति प्रतिवचनम् ॥ ॐ यथाविहितं
कां० ३ कर्म कुरु इत्याचार्येणोक्ते ॐ करवाणीति प्रतिवचनम् ॥ ततोऽग्नेर्दक्षिणतः शुद्धमासनं दत्त्वा तदुपरि
प्रागग्रान्कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानीय ॐ अत्र त्वं मे ब्रह्मा भव इत्यभिधाय भवामीति
तेनोक्ते तदुपरि ब्रह्माणमुदङ्मुखमुपवेशयेत् [ तदभावे पंचाशत्कुशनिर्मितं वा स्थापयेत् ]॥ ततः प्रणीता
पात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याऽग्नेरुत्तरतः कुशोपरि निदध्यात् ॥ ततः

परिस्तरणम् । बर्हिषश्चतुर्थभागमादाय [ अग्नेः समंतात् ] चतुर्भिः कुशपत्रैरुत्तराग्रैराग्नेयादीशानांतं प्राच्याम् ॥ १ ॥ पूर्वाग्रैर्नैर्ऋत्यादाग्नेयांतं दक्षिणस्याम् ॥ २ ॥ उत्तराग्रैर्नैर्ऋत्याद्वायव्यांतं प्रतीच्याम् ॥ ३ ॥ पुनः पूर्वाग्रै र्वायव्यादीशानांतं चोदीच्यां परिस्तरेत् ॥ ४ ॥ ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयम् ३ पवित्रार्थं साग्रमनंतर्गर्भंकुशपत्रद्वयम् २ प्रोक्षणीपात्रम् १ आज्यस्थाली १ संमार्जनकुशाः पंच ५ उपयमन कुशाः सप्त ७ समिधस्तिस्रः पालाश्यः ३ स्रुवः आज्यम् तंडुलपूर्णपात्रम् १ दक्षिणा वरो वा । एतानि पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयानि ॥ ततः पवित्रच्छेदनकुशैः पवित्रे छित्त्वा सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निक्षिप्य अनामिकांगुष्ठाभ्यां गृहीतपवित्राभ्यां तज्जलं किंचि त्त्रिरुत्क्षिप्य प्रणीतोदकेन प्रोक्षणीं त्रिरभिषिच्य प्रोक्षणी जलेनासादितवस्तुसेचनं कृत्वा अग्निप्रणीतयो र्मध्ये प्रोक्षणीपात्रं निदध्यात् ॥ आज्यस्थाल्यामाज्यनिर्वापः । अधिश्रयणम् ॥ ततः कुशं प्रज्वाल्य आज्यस्योपरि प्रदक्षिणं भ्रामयित्वा वह्नौ तत्प्रक्षिप्य अधोमुखस्य स्रुवस्य त्रिःप्रतनम् । संमार्जनकुशा

सं०प्र० नामग्रैरंतरतो मूलैर्बाह्यतः स्रुवं संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनः पूर्ववत्त्रिः प्रतप्य दक्षिणतो निदध्यात् ॥
६४ तत आज्यमग्नेरवतार्य त्रिः प्रोक्षणीवदुत्पूय अवेक्ष्य सत्यपद्रव्ये तन्निरसनं पुनः प्रोक्षण्युत्पवनम् । तत
उत्थाय उपयमनकुशान्वामहस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा तूष्णीं घृताक्ताः समिधः प्रक्षिपेत् ।
उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य प्रणीतापात्रे पवित्रे निधाय पातितदक्षिणजानुर्ब्रह्म
णान्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहुयात् ॥ [ तत्राहुत्यनंतरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे
प्रक्षेपः ] ॥ अथ होमः ॥ ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ॥ १ ॥ [ इति मनसा ] ॐ इंद्राय
कां० ३ स्वाहा । इदमिंद्राय न मम ॥ २ ॥ [ इत्याघारौ ] ॐ अग्नये स्वाहा । इदमग्नये न मम ॥ ३ ॥ ॐ सोमाय
स्वाहा इदं सोमाय न मम ॥ ४ ॥ [ इत्याज्यभागौ ] [ ततः प्राकृतोऽनन्वारब्धकर्तृको होमः ] ॐ अंतरि
क्षाय स्वाहा । इदमंतरिक्षाय न मम १ ॐ वायवे स्वाहा । इदं वायवे न मम २ ॐ ब्रह्मणे स्वाहा । इदंब्र० ३
ॐ छंदोभ्यः स्वाहा । इदं० ४ इति यजुर्वेदाहुतयः ॥ ॐ पृथिव्यै० इदं० ५ ॐ अग्नये० इदं० ६ ब्रह्मणे० इदं०

७ ॐ छंदोभ्य० इदं० ८ इति ऋग्वेदाहुतयः ॥ ॐ दिवे स्वाहा इदं० ९ ॐ सूर्याय० इदं० १० ॐ ब्रह्मणे० इदं० ११ ॐ छंदोभ्यः स्वाहा इदं० १२ इति सामवेदाहुतयः ॥ ॐ दिग्भ्यः स्वाहा इदं० १३ ॐ चंद्रमसे स्वाहा इदं० १४ ॐ ब्रह्मणे० इदं० १५ ॐ छंदोभ्यः स्वाहा० इदं० १६ ॐ प्रजापतये० इदं० १७ ॐ देवेभ्यः स्वाहा इदं १८ ॐ ऋषिभ्यः स्वाहा इदं० १९ ॐ श्रद्धायै० इदं० २० ॐ मेधायै० इदं० २१ ॐ सदसस्पतये० इदं० २२ ॐ अनुमतये स्वाहा इदमनुमतये न मम २३ इत्यथर्ववेदाहुतयः ॥ ततोऽन्वारब्धकर्तृको होमः॥ ॐ भूः स्वाहा । इदमग्नये न मम ॥ १ ॥ ॐ भुवः स्वाहा । इदमग्नये न मम ॥ २ ॥ ॐ स्वः स्वाहा । इदं सूर्याय न मम ॥ ३ ॥ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाᳪसि प्रमुमुग्ध्यस्मत्स्वाहा ॥ इदमग्नीवरुणाभ्यां न मम ॥ ४॥ ॐ स त्वन्नोऽअग्नेऽवमो भवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ ॥ अवयक्ष्व नो वरुणᳪरराणो वीहि मृडीकᳪसुहवो नऽएधि स्वाहा ॥ इदमग्नीवरुणाभ्यां न मम ॥ ५ ॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्वमित्त्वमयाऽअसि ॥ अयानो यज्ञं वहा

सं० पा० स्युया नों धेहि भेषुजर्ठस्वाहा ॥ इदमग्नये अयसे न मम ॥ ६ ॥ ॐ ये ते शुतं वुरुणु ये सहुस्रं युज्ञियाः पाशा
६५ वितता माहान्तः ॥ तेभिर्नोऽअुद्य संवितोत विष्णुर्विश्वे मुञ्चन्तु मुरुतः स्वुर्काः स्वाहा ॥ इदं वरुणाय सवित्रे
विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ ७ ॥ ॐ उदुत्तमं वरुण पाशमुस्मदवा धुमं विमध्यमर्ठ
श्रथाय ॥ अथांवुयमादित्यव्रुते तवानांगसो अदितये स्याम स्वाहा ॥ इदं वरुणायादित्यायादितये च न मम ॥
॥ ८ ॥ [ एताः सर्वप्रायश्चित्तसंज्ञकाः ] ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ॥ ९ ॥ ॐ अग्नये
स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते न मम ॥ १० ॥ ततः संस्रवप्राशनमाचमनं च । [ पूर्णपात्रदानम् ]
कां० ३ देशकालौ स्मृत्वा अद्य कृतैतद्वेदारंभहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापति
दैवतं सदक्षिणाकममुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणात्वेन तुभ्यमहं संप्रददे । इति ब्रह्मणे दक्षिणां
दद्यात् ॥ ॐ स्वस्तीति प्रतिवचनानंतरं ब्रह्मग्रंथिविमोकः ॥ एवं होत्रेऽपि दक्षिणां दद्यात् ॥ ततः ॐ सुमित्रिया
नऽआपऽओषधयः संतु । इति पवित्राभ्यां प्रणीताजलेन शिरः संमृज्य ॐ दुर्मित्रियास्तस्मै संतु योऽस्मान्द्वेष्टि

यं च वयं द्विष्मः। इति मंत्रेण ऐशान्यां प्रणीतान्युब्जीकरणम् ॥ ततः स्तरणक्रमेण बर्हिरुत्थाप्याज्येनाभिघार्य हस्तेनैव जुहुयात् ॥ ॐ देवागातुविदोगातुंवित्वा गातुमित मनसस्पत ॥ इमं देवयज्ञꣳ स्वाहा वातेधाः स्वाहा ॥१॥इति बर्हिर्होमः ॥ एवं होमं समाप्य ततो वेदाध्ययनमारभेत् ॥ तदर्थं वाराणसीगमनं कार्यम् । अशक्तौ तत्रैव वेदारंभं गुरुः कारयेत् ॥ तद्यथा ॥ देशकालौ संकीर्त्य मम ब्रह्मवर्चससिद्ध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं वेदसरस्वतीपूजनमाचार्यपूजनं च करिष्ये। इति संकल्प्य वेदसरस्वतीं स्थाप्य ॐ वेदसरस्वत्यै नमः । इति नाममंत्रेण यजुर्वेदं षोडशोपचारैः संपूज्य गंधपुष्पतांबूलद्रव्यवस्त्रादिभिर्गुरुपूजां कुर्यात् ॥ ततो गुरुः प्रत्यङ्मुखायोपविष्टाय पादोपसंग्रहणपूर्वकमाचार्यमुखमीक्षमाणाय अनसूयकाय स्वहस्तौ जानुभ्यामु परिक्तवते ब्रह्मचारिणे वेदं प्रयच्छति ॥ तत्र मंत्रः ॥ ॐ भूर्भुवः स्वः ॐ तत्सवितु०॥१॥ॐ इषेत्वोर्जे त्वांवाय वस्थदेवोवः सविताप्रार्प्पयतु श्रेष्ठतमाय कर्म्मणऽ आप्यायध्वमघ्न्याऽ इन्द्राय भागम्प्रजावतीरनमीवाऽ अय क्ष्मामा वस्तेनऽईशत माघशꣳसो ध्रुवाऽअस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥१॥ इति यजुर्वेद

सं०प्र० मंत्रः ॥ ॐ अग्निमींळे पुरोहितं यज्ञस्य देवमृत्विजम् ॥ होतारं रत्नधातमम् ॥ १ ॥ इति ऋग्वेदमंत्रः ॥ ॐ अग्नऽ
६६ आयाहि वीतये गृणानो हव्यदातये ॥ निहोतासत्सि बर्हिषि ॥ १ ॥ इति सामवेदमंत्रः ॥ ॐ शन्नो देवीरभि
ष्टयऽआपो भवन्तु पीतये ॥ शंय्योरभिस्रवन्तु नः ॥ १ ॥ इत्यथर्ववेदमंत्रः ॥ ॐ स्वस्तीत्युक्त्वा स्वशाखाविधि
वत्स्वशाखावेदं परशाखाविधिवत्परशाखावेदं च पठेत् ॥ ततो गुरुः शौचाचारांश्च शिक्षयेत् । तथा च स्मृतिः ।
"उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ॥ वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्।" इति । [नात्र पूर्णाहुति
होमः प्रमाणाभावात् ] ततः स्रुवेण भस्मानीय दक्षिणानामिकागृहीतभस्मना ॐ त्र्यायुषं जमदग्नेरिति ललाटे १
कां० ३ ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायाम् २ ॐ यद्देवेषु त्र्यायुषमिति दक्षिणबाहुमूले ३ ॐ तन्नोऽ अस्तु त्र्यायुषमिति
हृदि ४ इति चतुर्भिर्मंत्रैर्ललाटादिषु त्र्यायुषकरणं कर्त्तव्यम् ॥ ततो दशब्राह्मणभोजनं दक्षिणादानं च ॥ इति संस्कार
प्रकाशे वेदारंभप्रयोगः समाप्तः ॥ ॥ अथ समावर्त्तनकर्म्मप्रयोगः ॥ तत्र शुभदिने कृतनित्यक्रियः सभार्यः ब्रह्म
चारिणा सह शुभासने उपविश्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य अस्य ब्रह्मचारिणः गृहस्थाश्रमांतर

प्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं समावर्तनाख्यं कर्म्म करिष्ये ॥ इति संकल्प्य तदंगतया विहितं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं च कुर्यात् ॥ ततः भो आचार्य अहं स्नास्ये इति ब्रह्मचारी ब्रूयात्। स्नाहीति गुरुः ॥ ततो हस्तमात्रं चतुरस्रं स्थंडिलं कृत्वा कुशैः परिसमुह्य तान्कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेन प्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणानामिकांगुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्युक्ष्य। कांस्यपात्रेणाग्निमानीय स्वाभिमुखं स्थापयेत्। अग्न्यानीतपात्रयोर्जलादिप्रक्षेपः ॥ ततः पुष्पचंदनतांबूलवस्त्राण्यादाय देशकालौ स्मृत्वा अद्यकर्तव्यसमावर्त्तनहोमकर्म्मणि कृताकृतावेक्षणरूप ब्रह्मकर्म्मकर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे। वृतोऽस्मीति प्रतिवचनम् ॥ यथाविहितं कर्म्मकुरु इत्यभिधाय ॥ करवाणीति प्रतिवचनम् ॥ एवं होतारमपि वृणुयात् ॥ ततो ऽग्नेर्दक्षिणतः शुद्धमासनं दत्त्वा तदुपरि प्रागग्रान्कुशानास्तीर्य्य अस्मिन्कर्मणि त्वं मे ब्रह्मा भवेत्यभिधाय ॐ भवामीति तेनोक्ते ब्रह्माणमुदङ्मुखं तत्रोपवेशयेत् ॥ ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य्य कुशै

सं०१० राच्छाद्य ब्रह्मणो मुखमवलोक्य अग्नेरुत्तरतः कुशोपरि निदध्यात् ॥ ततः परिस्तरणम् ॥ बर्हिषश्चतुर्थभाग
६७ मादाय चतुर्भिर्दर्भदलैरुत्तराग्रैराग्नेयादीशानांतं प्राच्याम् ॥ १ ॥ पूर्वाग्रैर्नैर्ऋत्यादाग्नेयांतं दक्षिणस्याम् ॥ २ ॥
उत्तराग्रैर्नैर्ऋत्याद्वायव्यांतं प्रतीच्याम् ॥ ३ ॥ पुनः पूर्वाग्रैर्वायव्यादीशानांतं चोत्तरस्यां परिस्तरेत् ॥ ४ ॥ ततो
ऽग्नेरुत्तरतः पवित्रच्छेदनार्थं कुशत्रयम् ३ । पवित्रकरणार्थं साग्रमनन्तर्गर्भकुशपत्रद्वयम् २ । प्रोक्षणीपात्रम् ।
आज्यस्थाली । संमार्जनार्थं कुशाः पंच । उपयमनार्थं कुशाः सप्त । समिधस्तिस्रः । स्रुवः । आज्यम् । पूर्णपा
त्रम् । दक्षिणा । वरो वा । पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयम् ॥ ततः पवित्रच्छेदनकुशैः
कां० ३ पवित्रे छित्त्वा सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय अनामिकांगुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुत्पूय
प्रोक्षणीपात्रं वामकरे कृत्वा दक्षिणानामिकांगुष्ठगृहीतपवित्राभ्यां ।जलं किंचित्त्रिः प्रक्षिप्य प्रणीतोदकेन प्रोक्ष
णीमभ्युक्ष्य प्रोक्षणीजलेन यथासादितवस्तून्यभिषिच्य अग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात् ॥ तत
आज्यस्थाल्यामाज्यनिर्वापः । अधिश्रयणम् । ततस्तृणं प्रज्वाल्य आज्यस्योपरि प्रदक्षिणं भ्रामयित्वा वह्नौ

तत्प्रक्षेपः ॥ ततः अधोमुखस्य स्रुवस्य त्रिः प्रतपनं संमार्जनकुशानामग्रैरंतरतो मूलैर्बाह्यतः स्रुवं संमृज्य प्रणी
तोदकेनाभ्युक्ष्य पुनः प्रतप्य स्वदक्षिणतो निदध्यात् ॥ तत आज्यमग्निप्रदक्षिणं भ्रामयित्वा अवतार्य्य प्रोक्षणी
वत्पवित्राभ्यां त्रिरुत्पूय अवेक्ष्य सत्यपद्रव्ये तन्निरसनं कृत्वा पुनः पूर्ववत्प्रोक्षण्युत्पवनम् ॥ तत उत्थाय उप
यमनकुशान्वामहस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः प्रक्षिपेत् ॥ तत उप
विश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य प्रणीतापात्रे पवित्रे निधाय पातितदक्षिणजानुः ब्रह्मणा
न्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहुयात् ॥ तत्राहुत्यनंतरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः॥
अथ होमः ॥ ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ॥ [ इति मनसा ] ॐ इंद्राय स्वाहा ।
इदमिंद्राय न मम ॥ [ इत्याघारौ ] ॐ अग्नये स्वाहा । इदमग्नये न मम ॥ ॐ सोमाय स्वाहा ।
इदं सोमाय न मम ॥ [ इत्याज्यभागौ ] ततोन्वारब्धं विना ॥ ॐ अंतरिक्षाय स्वाहा । इदमंतरिक्षाय
न मम ॥ ॐ वायवे स्वाहा । इदं० ॥ ॐ ब्रह्मणे स्वाहा । इदं० ॥ ॐ छंदोभ्यः स्वाहा । इदं० ॥ इति यजुः ॥

सं०प्र०
६८

ॐ पृथिव्यै स्वाहा । इदं० ॥ ॐ अग्नये स्वाहा । इदं० ॥ ॐ छंदोभ्यः स्वाहा । इदं० ॥ ॐ ब्रह्मणे स्वाहा । इदं० ॥ इति ऋक् ॥ ॐ दिवे स्वाहा । इदं० ॥ ॐ सूर्याय स्वाहा । इदं० ॥ ॐ ब्रह्मणे स्वाहा । इदं० ॥ छंदोभ्यः स्वाहा । इदं० ॥ इति साम ॥ ॐ दिग्भ्यः स्वाहा । इदं० ॥ ॐ चंद्रमसे स्वाहा । इदं० ॥ ॐ ब्रह्मणे स्वाहा । इदं० ॥ ॐ छंदोभ्यः स्वाहा । इदं० ॥ इत्यथर्वा ॥ ॐ प्रजापतये स्वाहा । इदं० ॥ ॐ देवेभ्यः स्वाहा । इदं० ॥ ॐ ऋषिभ्यः स्वाहा । इदं० ॥ ॐ श्रद्धायै स्वाहा । इदं० ॥ ॐ मेधायै स्वाहा । इदं० ॥ ॐ सदसस्पतये स्वाहा । इदं० ॥ ॐ अनुमतये स्वाहा । इदं० ॥ [ ततोऽन्वारब्धकर्तृको होमः ]

कां० ३

ॐ भूः स्वाहा । इदमग्नये न मम ॥ ॐ भुवः स्वाहा।इदं वायवे न मम ॥ ॐ स्वः स्वाहा । इदं सूर्याय न मम ॥ ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांꣳसि प्रमुमुग्ध्यस्मत्स्वाहा । इदमग्नीवरुणाभ्यां न मम ॥ ॐ सत्वन्नोऽअग्नेवमो भवोती नेदिष्ठोऽअस्याऽ उषसो व्युष्टौ ॥ अवयक्ष्वनो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो नऽ एधि स्वाहा ॥ इदमग्नीवरुणाभ्यां न मम ॥

ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्त्वमयाऽ असि ॥ अया नो यज्ञं वहास्ययानो धेहि भेषजꣳ स्वाहा ॥ इदमग्नये अयसे न मम ॥ ॐ येत शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः ॥ तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥ इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳ श्रथाय ॥ अथा वयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा॥इदं वरुणायादित्यायादितये च न मम ॥ ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ॥ ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते न मम ॥ ततः संस्रवप्राशनम् ॥ आचमनम् ॥ [ पूर्णपात्रदानम् ॥ ] देशकालौ स्मृत्वा अद्य कृतैतत्समावर्त्तनहोमकर्म्मणि कृताकृतावेक्षणरूपब्रह्मकर्म्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतं सदक्षिणाकममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणात्वेन तुभ्यमहं संप्रददे । इति ब्रह्मणे दक्षिणां दद्यात् ॥ ॐ स्वस्तीति प्रतिवचनम् ॥ ब्रह्मग्रंथिविमोकः ॥ ॐ सुमित्रिया नऽआप ओषधयः संतु ॥ इति पवित्राभ्यां प्रणीताजलेन शिरः संमृज्य । ॐ दुर्म्मित्रियास्तस्मै संतु योऽस्मान्द्वेष्टि यंच वयं

द्विष्मः इति मंत्रेणैशान्यां प्रणीतान्युब्जीकरणम् ॥ ततः स्तरणक्रमेण बर्हिरुत्थाप्याज्येनाभिघार्य ॐ देवा

गातुविदो गातुंवित्त्वा गातुमितमनसस्पत इमं देवयज्ञꣳस्वाहा वातेधाः स्वाहा ॥ १ ॥ इति मंत्रेण हस्तेनैव जुहु
यात् ॥ इति बर्हिर्होमः ॥ ततोऽग्निपश्चिमोपविष्टो ब्रह्मचारी घृताक्तशुष्कानिषिद्धेतरेंधनेन पंचाहुतीर्हस्तेनैव जुहु
यात् ॥ ॐ अग्ने सुश्रवः सुश्रवसं मां कुरु ॥ ॐ यथा त्वमग्ने सुश्रवः सुश्रवा असि । ॐ एवं मां सुश्रवः सौश्र
वसं कुरु ॥ ॐ यथा त्वमग्ने देवानां यज्ञस्य निधिपा असि ॥ ॐ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ॥
ततः प्रदक्षिणमाग्निं वारिणा पर्युक्ष्य उत्थाय घृताक्तां प्रादेशमितसमिधमादाय जुहुयात् ॥ तत्र मंत्रः ॐ

अग्नये समिधमाहार्षं बृहते जातवेदसे ॥ यथा त्वमग्ने समिधा समिध्यस एवमहमायुषा मेधया वर्च्चसा प्रजया
पशुभिर्ब्रह्मवर्च्चसेन समिंधे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्व्यन्नादो
भूयासं स्वाहा ॥ १ ॥ एवमेव समिदंतरद्वयमनेनैव मंत्रेण हुत्वा उपविश्य पूर्वोक्तक्रमेण पंचाहुतीर्घृताक्तशुष्क
निषिद्धेतरेंधनेन जुहुयात् ॥ ॐ अग्ने सुश्रवः सुश्रवसं मां कुरु । ॐ यथा त्वमग्ने सुश्रवः सुश्रवा असि ॥ ॐ एवं

मां सुश्रवः सौश्रवसं कुरु ॥ ॐ यथा त्वमग्ने देवानां यज्ञस्य निधिपा असि ॥ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ॥ ततः प्रदक्षिणमग्निं वारिणा पर्युक्ष्य तूष्णीं पाणी प्रतप्य मुखं प्रतिमंत्रांते अवमृशति ॥ ॐ तनूपा अग्नेऽसि तन्वं मे पाहि । ॐ आयुर्दा अग्नेऽस्यायुर्मे देहि ॥ ॐ वर्च्चोदा अग्नेऽसि वर्च्चो मे देहि ॥ ॐ अग्ने यन्मे तन्वा ऊनं तन्म आपृण ॥ ॐ मेधां मे देवः सविता आदधातु ॥ ॐ मेधां मे देवी सरस्वती आदधातु ॥ॐ मेधां मे अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ ततः सर्वगात्रादिषु दक्षिणपाणिना स्पर्शः ॥ तत्र प्रत्येकं मंत्रः ॥ ॐ अंगानि च म आप्यायन्ताम् । इति शिरःप्रभृतिपादपर्यंतानि सर्वाण्यंगान्यालभते ॥ ततो दक्षिणहस्ताग्रेण । ॐ वाक्च म आप्यायतामिति मुखालंभनम् । ॐप्राणश्च म आप्यायताम् । इति नासारंध्रे युगपत् ॥ ॐ चक्षुश्च म आप्यायतामिति चक्षुषी युगपत् ॥ ॐ श्रोत्रं च म आप्यायताम् । इति श्रोत्रद्वयस्पर्शः ॥ ॐ यशो बलं च म अप्यायताम् । इति बाह्वोरुपस्पर्शनम् ॥ ततस्त्र्यायुष्याणि करोति ॥ दक्षिणाऽनामिकया भस्म गृहीत्वा ललाटादिषु । ॐ त्र्यायषं जमदग्नेः । इति ललाटे ॥ ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायाम् ॥ ॐ

यद्देवेषुंत्र्यायुषमिति दक्षिणांसे ॥ ॐ तन्नोऽअग्रे त्र्यायुषमिति हृदि ॥ ततो व्यस्तपाणिभ्यां पृथिवीं स्पृशन्



प्रथमं वैश्वानरं संबोध्याभिवादयेत् ॐ अमुकगोत्रोऽहममुकप्रवरोऽहममुकशर्माहं भो वैश्वानर त्वामभि वादये । इति वैश्वानरं प्रणमेत् ॥ एवं वरुणं तथाचार्यं चापि संबोध्याभिवादयेत् ॥ तत आयुष्मान् भव सौम्य इत्याचार्यो ब्रूयात् ॥ ततोऽग्नेरुत्तरतः प्रागग्रान्कुशानास्तीर्य तदुपरि दक्षिणोत्तरक्रमेणाष्टौ वारिपूर्णकलशान्संस्थाप्य तत्पूर्वभागे प्रागग्रकुशेषूदङ्मुखः स्थित्वा एकस्मादाम्रपल्लवेनोदकं गृहीत्वा । ॐ ये अप्स्वंतरग्नयः प्रविष्टा गोह्योपगोह्यो मयूखो मनोहास्खलो विरुजस्तनूदूषिरिंद्रियहातितान्सृजामि



यो रोचनस्तमिह गृह्णामि ॥ इति मंत्रेण तेन मामभिषिंचामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसाय । इत्यात्मानमभिषिंचति ॥ १ ॥ पुनः ॐ येऽप्स्वंतरग्नय इति मंत्रेणैव द्वितीयोदकुंभादुदकमादाय ॐ येन श्रियमकृणुतां येनावमृशतां सुराम् ॥ येनाक्षावभ्यषिंचतां यद्वां तदश्विना यशः । इति मंत्रेणात्मानमभिषिंचति ॥ २ ॥ पुनः ॐ येप्स्वंतरग्नय०इत्यनेन तृतीयोदकुंभादुदकमादाय ॐ आपो हि ष्ठा मयोभुवस्ता नऽ ऊर्जे दधातन ॥

मुहे रणाय चक्षसे ॥ इति मंत्रेणाभिषिंचति ॥ ३ ॥ पुनः ॐ येप्स्वंतरग्नय० इत्यनेन चतुर्थोदकुंभादुदकमादाय ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः ॥ उशतीरिव मातरः । इति मंत्रेणाभिषिंचति ॥ ४ ॥ पुनः ॐ येप्स्वंतरग्नय० इति मंत्रेण पंचमोदकुंभादुदकमादाय ॐ तस्माऽ अरंगमाम वो यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च नः । इति मंत्रेणाभिषिंचति ॥ ५ ॥ पुनः ॐ येप्स्वंतरग्नय इत्यनेन मंत्रेण षष्ठसप्तमाष्टमोदकुंभेभ्यः प्रत्येकमुदकमादाय तूष्णीं वारत्रयमभिषिंचति ॥६॥७॥८॥ ततः । ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय ॥ अथावयमादित्य व्रते तवानागसो अदितये स्याम ॥ १ ॥ इति मंत्रेण मेखलां शिरोमार्गेण निःसार्य भूमौ निधाय तथैव कृष्णाजिनं चोत्तार्य दंडत्यागं कृत्वा तमुदगग्रं भूमौ निधाय अन्यद्वासस्तूष्णीं परिधाय आचम्य कृतांजलिरादित्यमुपतिष्ठते ब्रह्मचारी ॥ तत्र मंत्रः ॥ ॐ उद्यन्भ्राजभृष्णुरिंद्रो मरुद्भिरस्तात्प्रातर्यावभिरस्ता दशसनिरसि दशसनिं मा कुर्वाविदन्मा गमयोद्यन्भ्राजभृष्णुरिंद्रो मरुद्भिरस्ताद्दिवा याभिरस्ताच्छतसनिरसि शतसनिं मा कुर्वाविदन्मा गमयोद्यन्भ्राजभृष्णुरिंद्रो मरुद्भिरस्तात्सायं यावभिरस्तात्सहस्र

सं०प्र० सनिरसि सहस्रसनिं मा कुर्वांविदन्मा गमय ॥ इति ॥ ततो दधि वा तिलान्वा दक्षिणहस्तमध्यगतेन सोमती
७१ र्थेन प्राश्य आचम्य नखरोमाणि वापयित्वा स्नात्वा औदुंबरकाष्ठेन दंतधावनम् ॥ तत्र मंत्रः ॥ ॐ अन्नाद्याय
व्यूहध्वꣳसोमो राजायमागमत् ॥ स मे मुखं प्रमार्क्षते यशसा च भगेन च ॥ १ ॥ इति मंत्रेण दंतान्क्षालयि
त्वाचम्य सुगंधिद्रव्यमिश्रितेन यवादेश्चूर्णेन संनीतेन शरीरमुद्वर्त्य पुनरुष्णोदकेन सशिरस्कं स्नात्वा आचम्य
चंदनाद्यनुलेपनं पाणिभ्यां गृहीत्वा "मुखं नासिकां च प्राणापानौ मे तर्प्पय । चक्षुर्मे तर्प्पय श्रोत्रं मे तर्प्पय ॥"
इति मंत्रेणालभते ॥ ततः पाणी प्रक्षाल्य तदुदकमंजलिनादाय अपसव्यं कृत्वा दक्षिणामुखो भूत्वा दक्षिणस्यां
कां० ३ दिशि । ॐ पितरः शुंधध्वमित्यनेन मंत्रेण भूमौ निषिंचेत् पितृतीर्थेन ॥ ततो यज्ञोपवीती भूत्वा आचम्य चंद
नादिना ॐ सुचक्षा अहमक्षीभ्यां भूयासꣳसुवर्चा मुखेन ॥ सुश्रुत्कर्णाभ्यां भूयासम् ॥ इति मंत्रेणानुलिप्य सकृ
द्धौताहतवासःपरिधानम् । ॐ परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि ॥ शतं च जीवामि शरदः
पुरूची रायस्पोषमभिसंव्ययिष्ये ॥ १ ॥ इत्यनेन मंत्रेण वासः परिधाय ततो यज्ञोपवीतपरिधारणम् । ॐ यज्ञो

पवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ॥ आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ १ ॥
यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि ॥ इत्यनेन मंत्रेण यज्ञोपवीतिधारणम् ॥ आचमनम् ॥ अथोत्तरीय
धारणम् । तत्र मंत्रः ॥ ॐ यशसा मा द्यावापृथिवी यशसेंद्राबृहस्पती ॥ यशो भगश्च माविदद्यशो मा प्रतिप
द्यताम् ॥ इति मंत्रेणात्मानमाच्छादयीत ॥ ततः पुष्पमालाग्रहणम् । तत्र मंत्रः ॥ ॐ याऽ आहरज्जमदग्निः
श्रद्धायै कामायेंद्रियाय ॥ ता अहं प्रतिगृह्णामि यशसा च भगेन च ॥ १ ॥ ततस्तां पुष्पमालां शिरसि बध्नी
यात् ॥ तत्र मंत्रः ॥ ॐ यद्यशोऽप्सरसामिंद्रश्चकार विपुलं पृथु ॥ तेन सङ्ग्रथिताः सुमनसऽ आबध्नामि यशो
मयि ॥ १ ॥ तत उष्णीषेण शिरो वेष्टयते ॥ तत्र मंत्रः ॥ ॐ युवा सुवासाः परिवीतऽ आगात्सऽ उ श्रेयान्भवति
जायमानः ॥ तं धीरासःकवयऽ उन्नयन्ति स्वाध्यो ३ मनसा देवयन्तः ॥ १ ॥ इत्युष्णीषवेष्टनम् ॥ ततः ॐ अलङ्करण
मसि भूयोलङ्करणं भूयात् ॥ इति मंत्रेण दक्षिणवामकर्णयोः कुंडले परिदधाति ॥ ततोंजनम् ॥ ॐ वृत्रस्यासि
कनीकाश्चक्षुर्दा असि चक्षुर्मे देहि ॥ इत्यनेन मंत्रेण नेत्रयोः कज्जलं सौवीरांजनं वा अंक्ते ॥ तत आदर्शं आ

तमानं दर्शयति । तत्र मंत्रः॥ॐ रोचिष्णुरसि० ॥ ततश्छत्रधारणम्॥ॐ बृहस्पतेश्छदिरसि पाप्मनो मामंतर्देहि तेजसो यशसो मामंतर्देहि॥इति मंत्रेण छत्रं प्रतिगृह्णाति॥ततः ॐप्रतिष्ठे स्थो विश्वतो मा पामिति मंत्रेण उपानहौ युगपत्पादयोः प्रतिमुच्य ॥ ॐविश्वाभ्यो मानाष्ट्राभ्यस्परिपाहि सर्वतः॥ १॥इत्यनेन मंत्रेण वैणवं दंडमादत्ते॥तत आचार्यः स्नातकस्य नियमाञ्छ्रावयेत् ॥ शूद्रादिस्पर्शनं न कर्तव्यम् ॥ नृत्यगीतवादित्राणि न प्रतिगच्छेत् ॥ क्षेमे सति रात्रौ ग्रामांतरं न गच्छेत्॥अक्षेमे तु कामं गच्छेत्॥क्षेमे सति न धावेत्॥कूपमध्ये अवलोकनं न कर्तव्यम्॥वृक्षारोहणं न कर्तव्यम् ॥ फलत्रोटनं न कर्तव्यम्॥संध्यासमये गमनं न कर्तव्यम्॥नग्नस्नानं न कर्तव्यम् ॥ पर्वतगर्तादेर्लंघनं न कर्तव्यम्॥लज्जाकरं दुःखकरममंगलभाषणं न कर्तव्यम्॥संध्यासमये उपरक्तसूर्यबिंबावलोकनं न कर्तव्यम्॥सवर्णं विना सिद्धभिक्षाचर्या न कर्तव्या॥जलमध्ये स्वमुखं न पश्येत् ॥ अनुत्पन्नलोम्नीं स्त्रीं पुरुषाकृतिं स्त्रीं नपुंसकं च एतान्नोपहसेत् ॥ अभिगमनं च न कारयेत् ॥ गर्भिणीं विजन्या इति ब्रूयात् ॥ सकुलमिति नकुलं ब्रूयात् ॥ कपालं भगालमिति ब्रूयात् ॥ इंद्रधनुः मणिधनुरिति ब्रूयात् ॥ परस्य गां वत्सं पाययंतीं

परस्मै स्वामिने वा न कथयेत् ॥ सस्यवत्यां भूमौ केवलायां तृणैरनंतर्हितायां मूत्रपुरीषोत्सर्गं न कुर्यात् ॥ धावमानः सन् उत्तिष्ठन् सन् मूत्रपुरीषोत्सर्गं न कुर्यात् ॥ स्वयं प्रशीर्णेनायज्ञियकाष्ठेन गुदं प्रमृजीत ॥ तृणाद्यंतरभूमौ शिरः प्रावरणैरावेष्ट्य यज्ञोपवीतं निवीतं कृत्वा आलंबितं कर्णे कृत्वा दिवोदङ्मुखो रात्रौ दक्षिणामुख उपविश्य मौनी भूत्वा पुरीषोत्सर्गं कुर्यात् ॥ नील्यादिरंजितवस्त्रं न परिदधीत ॥ तिस्रो रात्रीर्व्रतं चरेत् ॥ अमांसाशी भवति ॥ अमृन्मयेन पात्रेण उदकादिकं पिबति ॥ स्त्रीशूद्रशवकाकशुनां चादर्शनमसंभाषा च तैः ॥ शवशूद्रसूतकान्नानि च नाद्यात् ॥ मूत्रपुरीषे ष्ठीवनं चातपे न कुर्यात् ॥ सूर्यात्स्वमात्मानं छत्रादिना अंतर्हितं न कुर्यात् ॥ तप्तेन जलेन शौचाचमनादिकाः क्रिया न कुर्वीत ॥ रात्रौ दीपं प्रज्वाल्य भोजनं कुर्वीत सत्यवाक्यांच्चारणमेव कुर्यात् ॥ इत्यादियमनियमाः कर्त्तव्याः ॥ ततः । आचार्याय वरां दक्षिणां दद्यात्॥ छायापात्रदानं कार्य्यम् ॥ यथाशक्ति ब्राह्मणान्भोजयेत् । भूयसीं दत्त्वा तैराशिषो गृहीत्वा देवताविसर्जनमीश्वरार्पणं च कुर्यात्॥ इति संस्कारप्रकाशे समावर्त्तनप्रयोगः ॥ अथ यज्ञोपवीतकर्म्मणः सामग्री॥ कुंकुमम्। चंदनम् । केशरम् ।

सं० प्र० कर्पूरम्। पुष्पाणि विचित्राणि । पुष्पमालाः । धूपः । दीपः । नैवेद्यं लड्डुकादि । पूगीफलानि । तांबूलानि । ऋतु
७३ फलानि । नारिकेलफलानि । यज्ञोपवीतानि १० । तंडुलाः। सर्वौषधिः। पंचरत्नानि । सप्तमृत्तिकाः । आम्रपल्लवाः।
दूर्वाः। पंचपल्लवाः। सर्षपाः । गोमयम् । गोमूत्रम् । दुग्धम् । दधि । घृतं गव्यम् । ताम्रकलशः१ मृन्मयकलशः१
छायापात्रम् १ कांस्यकटोरिका२ प्रणीतापात्रम्१ प्रोक्षणीपात्रम् १ आज्यस्थाली १ पूर्णपात्रत्रयम् ३ कुशाः ।
स्रुवः खादिरः। पालाशसमिधः। आरण्यशुष्कगोमयम् । स्वर्णशकलानि ७। आमलकफलानि । द्राक्षा । यवाः ।
आर्द्रकम् ।आचार्यादिवस्त्राणि । मृगचर्म । दण्डः । [विप्रस्य पालाशो बैल्वो वा दंडः । क्षत्रियस्य वाटखादिरौ ।
कां० ३ वैश्यस्य पैलवौदुंबरौ । असंभवे सर्वे वा सर्वेषांम् ] मेखला । ब्राह्मणस्य मौंजी मेखला । क्षत्रियस्य धनुर्ज्या ।
वैश्यस्य शणसूत्रमयी मेखला। अभावे कुशादिनिर्मिता सर्वेषाम् । ब्रह्मचारिवस्त्राणि। प्रायश्चित्तधेनुः१तदभावे
तन्मूल्यम् । ब्राह्मणभोजनार्थं शुद्धं पक्वान्नम् । पलाशादिपत्राणि । पत्रपुटकानि । रक्तसूत्रम् । सिंदूरम् ।
कज्जलम्। छत्रम्। आदर्शः । तिलाः। आभूषणम्। वंशयाष्टिका । सुगंधितैलम् । गुलालम् । उपानहौ । [ग्रहम

खकरणे नवग्रहशांत्युपकरणानि ] पादुके । काष्ठपट्टिका १ । आचार्यादिदक्षिणा । ब्राह्मणभोजनम् । भूयसी दक्षिणा । भांडाष्टकम् । मृन्मयशरावाः । पंच रजांसि । कौसुंभवस्त्रम् । मंत्रोपदेशार्थं कौशेयवस्त्रम् । श्वेतवस्त्रम् । उदुबंरशाखा । इत्यादि । इति यज्ञोपवीतोपकरणानि ॥ ॥ इति श्रीरत्नगढनिवासिना गौडवंशावतंसपण्डित श्रीरामकृष्णामरचन्द्रयोः पौत्रेण श्रीकस्तूरीचंद्रात्मजेन श्रीचतुर्भुजदत्तसूनुना श्रीमहादेवभक्तनानानिबंधकर्त्रा पण्डितश्रीचतुर्थीलालशर्मणा विरचिते संस्कारप्रकाशे प्रयोगनिबंधे उपनयनवेदारंभसमावर्त्तनकर्मप्रयोगकथनं नाम तृतीयः काण्डः समाप्तः ॥ ३ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



इति श्रीसंस्कारप्रकाशे तृतीयः काण्डः समाप्तः ।

अथ समस्तब्राह्मणानां प्रवरा लिख्यंते ॥ गोत्रप्रवर्त्तकमुनिव्यावर्त्तको मुनिगणः ॥ तथा च जमदग्निगोत्रस्य प्रवराः जमदग्न्यौर्ववशिष्ठाः ॥ भरद्वाजगोत्रस्य भरद्वाजाङ्गिरसबार्हस्पत्त्याः ॥ विश्वामित्रगोत्रस्य विश्वामित्रमरीचिकौशिकाः ॥ अत्रिगोत्रस्य अत्र्यात्रेयशातातपाः ॥ गौतमगोत्रस्य गौतमवशिष्ठबार्हस्पत्याः ॥ वशिष्ठगोत्रस्य वशिष्ठः । केषाञ्चित् वशिष्ठात्रिसाङ्कृतयः ॥ काश्यपगोत्रस्य काश्यपाप्सारनैध्रुवाः ॥ अगस्त्यगोत्रस्य अगस्तिदधीचिजैमिनयः ॥ सौकालिनगोत्रस्य सौकालिनाङ्गिरसबार्हस्पत्याप्सारनैध्रुवाः ॥ मौद्गल्यगोत्रस्य और्वच्यवनभार्गवजामदग्न्याप्नुवन्तः ॥ पराशरगोत्रस्य पराशरशाक्तवशिष्ठाः ॥ बृहस्पतिगोत्रस्य बृहस्पतिकपिलपार्वणाः ॥ काञ्चनगोत्रस्य अश्वत्थदेवलदेवराजाः ॥ विष्णुगोत्रस्य विष्णुवृद्धिकौरवाः ॥ कौशिकगोत्रस्य कौशिकात्रिजमदग्नयः ॥ कात्यायनगोत्रस्य अत्रिभृगुवशिष्ठाः ॥ आत्रेयगोत्रस्य आत्रेयशातातपसांख्याः ॥ काण्वगोत्रस्य काण्वाश्वत्थदेवलाः ॥ कृष्णात्रेयगोत्रस्य कृष्णात्रेयात्रेयावासाः ॥ साङ्कृतिगोत्रस्य अव्याहारात्रिसाङ्कृतयः ॥ कौण्डिल्यगोत्रस्य कौण्डिल्यस्तिमिककौत्साः ॥ गर्गगोत्रस्य गार्ग्यकौस्तुभमा

संं०प्र० ण्डव्याः ॥ आङ्गिरसगोत्रस्य आङ्गिरसवाशिष्ठबार्हस्पत्याः ॥ अनावृकाक्षगोत्रस्य गार्ग्यगौतमवशिष्ठाः ॥
७५ अव्ययगोत्रस्य अव्ययवीलसारस्वताः ॥ जैमिनिगोत्रस्य जैमिन्यतथ्यसाङ्कृतयः ॥ वृद्धिगोत्रस्य कुरुवृद्धाङ्गिरो
बार्हस्पत्याः ॥ शाण्डिल्यगोत्रस्य शाण्डिल्यासितदेवलाः ॥ वात्सगोत्रसावर्णगोत्रयोः और्वच्यवनभार्गवजामद-
ग्न्याप्नुवन्तः ॥ आलम्ब्यायनगोत्रस्य आलम्ब्यायनशालङ्कायनशाकटायनाः॥ वैयाघ्रपद्यगोत्रस्य साङ्कृतिः॥
घृतकौशिकगोत्रस्य कशिककौशिकघृतकौशिकाः । केषाञ्चित् कुशिककौशिकबन्धुलाः ॥ शक्तिगोत्रस्य
शक्तिपराशरवशिष्ठाः ॥ काण्वायनगोत्रस्य काण्वायनाङ्गिरसबार्हस्पत्यभरद्वाजाजमीढाः ॥ वासुकिगोत्रस्य
कां० ४ अक्षोभ्यानन्तवासुकयः॥ गौतमगोत्रस्य गौतमाप्सराङ्गिरसबाहस्पत्यनैध्रुवाः। केषाञ्चित् गौतमाङ्गिरसावासाः॥
शुनकगोत्रस्य शुनकशौनकगृत्समदाः ॥ सौपायनगोत्रस्य प्रवराः और्वच्यवनभार्गवजामदग्न्याप्नुवन्तः ॥
इति धनञ्जयकृतधर्म्मप्रदीपे गोत्रप्रवरविवेकः ॥ ॥ अथ विवाहकाण्डश्चतुर्थः ॥ ४ ॥ अथोद्वाहविधानं च
प्रवक्ष्यामि त्रिवर्गदम् ॥ सूत्रैर्भाष्यैर्धर्मशास्त्रैः सांप्रदायानुसारतः ॥ १ ॥ तत्र तावत्कन्यावरयोर्विवाहकालः ।

[ ज्योतिर्निबंधे ] षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः ॥ सोमो भुंक्तेऽथ गंधर्वस्ततः पश्चाद्धुताशनः ॥ अतो गर्भान्विते युग्मे सप्तसंवत्सरात्परम् ॥ आदशाब्दं तु कन्याया विवाहः सार्ववर्णिकः ॥ [ मनुस्मृतौ ] त्रिंशद्वर्षोद्वहेत्कन्यां कृत्वा द्वादशवार्षिकीम् ॥ त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥ [ भारतेपि ] त्रिंशद्वर्षः षोडशाब्दां भार्यां विदेत नग्निकाम् । त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वर इति । अत्रकन्यायाः षोडशद्वादशाद्बौ सत्ययुगादिपरौ दशाष्टौ वर्षौकलियोग्यौ जानीयात् । [ नारदसंहितायाम् ] युग्मेऽब्दे जन्मतः स्त्रीणां प्रीतिदं पाणिपीडनम् ॥ एतत्पुंसामयुग्मेऽब्दे व्यत्यये नाशनं तयोः॥ [राजमार्तण्डे] अयुग्मे दुर्भगा नारी युग्मे तु विधवा भवेत् ॥ तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता ॥ मासत्रयादूर्ध्वमयुग्मवर्षे युग्मेपि मासत्रयमेव यावत् ॥ "विवाहशुद्धिं प्रवदंति सर्वे व्यासादयो ज्योतिषि जन्ममासात् ॥ " [ गर्गसंहितायाम् ] "अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी । दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥ गौरीं ददन्नाकलोके वैकुंठे रोहिणीं ददत् । कन्यां ददद्ब्रह्मलोके रौरवे तु रजस्वलाम् ॥ प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति । मासिमासि

सं०प्र० रजस्तस्याः पिता पिबति शोणितम् ॥ माता चैव पिता चैव ज्येष्ठभ्राता तथैव च । त्रयस्ते नरकं यांति दृष्ट्वा
७६ कन्यां रजस्वलाम् ॥ तस्माद्विवाहयेत्कन्यां यावन्नर्त्तुमती भवेत् । विवाहोऽष्टमवर्षायाः कन्यायास्तु प्रशस्यते॥"
[ तत्र सप्तमाष्टमाब्द उत्तमः ॥ नवमदशमो मध्यमः ॥ एकादशाब्दः अधम इति ॥ अत्र कन्यावय ऊर्ध्वं
द्विगुणाब्दवयस्कवराय कन्यां दद्यात् । अन्यथा दाने दोषभागी स्यादिति ] [ अथ गुर्वर्कबलं ज्योतिर्निबंधे
गर्गः ॥ ] स्त्रीणां गुरुबलं श्रेष्ठं पुरुषाणां रवेर्बलम् । तयोश्चंद्रबलं श्रेष्ठमिति गर्गेण भाषितम् ॥ जन्मत्रिदश
मारिस्थः पूजया शुभदो गुरुः । विवाहेऽथ चतुर्थाष्टद्वादशस्थो मृतिप्रदः ॥ ( देवलः ) नष्टात्मजा धनवती
कां० ४ विधवा कुशीला पुत्रान्विता हतधवा सुभगा विपुत्रा । स्वामिप्रिया विगतपुत्रधवा धनाढ्या वंध्या भवेत्सुरगुरौ
क्रमशोऽभिजन्म ॥ अथावश्यके दोषापवादस्तत्रैव ॥ गुरुः स्वोच्चे स्वमैत्रे स्वांशे वर्गोत्तमेऽपि वा । शुभस्तुर्याष्टमोऽ
त्योपि नीचारिस्थः शुभोऽप्यसन् ॥ झषचापकुलीरस्थो जीवोऽप्यशुभगोचरः । अतिशोभनतां दद्याद्विवाहो
पनयादिषु ॥ दशवर्षव्यतिक्रांता कन्या शुद्धिविवर्जिता । तस्यास्तारेंदुलग्नानां शुद्धौ पाणिग्रहो मतः ॥ द्वादशे

कादशे वर्षे यस्याः शुद्धिर्न जायते। पूजाभिः शकुनैर्वापि तस्या लग्नं प्रदापयेत्॥ रजस्वला यदा कन्या गुरुशुद्धिं न चिंतयेत्। अष्टमेपि प्रकर्त्तव्यो विवाहस्त्रिगुणार्चनात्॥ अथ गुरुपूजाप्रयोगः॥ कन्याया विवाहकाले ब्राह्मणस्योपनयने चागुरुशुद्ध्यभावे गुरुपूजा कार्या॥ तद्यथा॥ चंद्रताराादिबलान्विते शुभदिने वा गुरुवासरे प्रातर्नित्यावश्यकं समाप्य सपत्नीकः स्वासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य देशकालौ स्मृत्वा मम अस्याः कन्याया विवाहे जन्मराशेः सकाशात् अमुकानिष्टस्थानस्थितगुरुदोषनिवृत्त्यर्थमेकादशस्थानस्थितवदुत्तमफलप्राप्त्यर्थमायुरारोग्यार्थं श्रीगुरुप्रसन्नतार्थं गरुपूजां करिष्ये। तदंगत्वेन गणपतिपूजनं स्वस्तिपुण्याहवाचनमाचार्यादिवरणं च करिष्ये॥ इति च संकल्प्य गणपतिपूजनं पुण्याहवाचनमाचार्यादिवरणं च प्रथमकांडोक्तं सर्वं कुर्यात्॥ ततो हस्तमात्रं चतुरस्रं कुंडं स्थंडिलं वा कृत्वा तत्र पंचभूसंस्कारान्संपाद्य वरदनामानमग्निं प्रतिष्ठाप्य तद्रक्षार्थं किंचिन्नियुज्य तदैशान्यां दिशि हरिद्राक्षतनिर्मितदीर्घचतुरस्रमंडलमध्ये नूतनं धवलं कलशं कलशस्थापनविधिना संस्थापयेत्॥ तन्मध्ये यूथिकां दमनवृक्षपत्राणि मदनं मधुपुष्पं पलाशं सर्षपान्

स०प्र० बलाम् गुडूचीम् अपामार्गम् वायविडंगम् शंखिनीम् वचाम् सहदेवीम् विष्णुक्रांताम् शतावरीम् कुष्ठम्
७७ जटामांसीम् हरिद्राद्वयम् देवदारुम् शैलेयम् शठीम् चंदनम् पंचगव्यम् अश्वत्थादिपंचपल्लवान् पंचर
त्नानि च निक्षिपेत् ॥ ततः कलशोपरि वंशपात्रं निधाय तत्र पीतपट्टवस्त्रं प्रसार्य्य स्वर्णमयीं गुरुप्र
तिमां यथाशक्तिरचिताम् अग्न्युत्तारणपूर्वकं सन्निधाय पीतवस्त्रेणाच्छाद्य पुरुषसूक्तेन नाममंत्रांते ।
आवाहनासनपाद्यार्घ्याचमनीयस्नानपंचामृतस्नानपीतवस्त्रयज्ञोपवीतपतिचंदनाक्षतपीतपुष्पधूपदीपदध्योदननैवे
द्यतांबूलफलदक्षिणानीराजनैः संपूजयेत् ॥ ततः कुशकंडिकां कृत्वा आघाराज्यभागांते दधि मधुघृता
कां० ४ क्ताः साकल्यपायससहिता अश्वत्थसमिधोऽष्टोत्तरशतम् । ॐ बृहस्पतेऽअति यदर्य्यो अर्हा द्युमद्वि
भाति क्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजात तदस्मासु द्रविणं धेहि चित्रं स्वाहा इदं गुरवे । इति मंत्रेण
जुहुयात् ॥ १०८ ॥ ततो होमांते पुनः पीतगंधपुष्पधूपदीपदध्योदननैवेद्यफलतांबूलदक्षिणादिभिर्गुरुं संपूज्य
प्रार्थनां कुर्यात् ॥ "नमस्तेंऽगिरसां नाथ वाकपतेऽथ बृहस्पते ॥ क्रूरग्रहैः पीडितानाममृताय नमो नमः ॥ १ ॥"

इति प्रार्थ्य पीतगंधाक्षतपुष्पफलयुतताम्रपात्रस्थजलेनार्घ्यं दद्यात् ॥ ॐ गंभीरदृढरूपाङ्ग देवेज्य सुमते प्रभो ॥ नमस्ते वाक्पते शांत गृहाणार्घ्यं नमोऽस्तु ते ॥ १ ॥ इत्यर्घ्यं दद्यात् ॥ ततः । ॐ भक्त्या यत्ते सुराचार्य होमपूजादि सत्कृतम् ॥ तत्त्वं गृहाण शांत्यथ बृहस्पते नमोनमः ॥ १ ॥ जीवो बृहस्पतिः सूरिराचार्यो गुरुरं गिराः ॥ वाचस्पतिर्देवमंत्री शुभ कुर्यात्सदा मम ॥ २ ॥ इति पुनः प्रार्थयेत् । ततः स्विष्टकृत ॥ व्याहृतिवारुण प्राजापत्यांतं होमशेषं समाप्य दिक्पालेभ्यो माषभक्तबलिं दत्त्वा आचामेत् ॥ तत आचार्यः कलशो दकेन दूर्वाम्रपल्लवैः सपत्नीकं सपुत्रं यजमानं वारुणैर्मंत्रैः समुद्रज्येष्ठा॰इत्यनेन चाभिषिंचेत् ॥ तत आज्याव लोकनं कृत्वा आचार्याय सोपस्करां धेनुं गुरुप्रतिमां च दत्त्वा ऋत्विग्भ्योपि दक्षिणां दद्यात् ॥ ततो गुरुदानम् ॥ "अश्वं सुवर्णं मधु पीतवस्त्रं सपीतधान्यं लवणं सुपुष्पम् ॥ सशर्करं तद्रजनीप्रयुक्तं दुष्टो पशांत्यै गुरवे प्रणीतम् ॥ १ ॥" एवं यथाशक्त्यश्वादीनि दानानि संपाद्य देशकालौ स्मृत्वा मम अस्याः कन्याया विवाहे अमुकानिष्टस्थानस्थितगुरुदोषशांत्यर्थम् आयुरारोग्यप्राप्त्यर्थं गुरुप्रसन्नतार्थम् इमान्यश्वा

सं०१० दीनि दानानि नानादैवतानि यथाशक्तिकल्पितानि अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे
७८ इति संकल्प्य ब्राह्मणाय दद्यात् ॥ ततो दानप्रतिष्ठार्थं दक्षिणां दत्त्वा देवता विसृज्य यथाशक्ति ब्राह्मणान्भोज
येत् ॥ ततः कर्म्मसंपूर्त्तिकामो विष्णुं स्मरेत् ॥ एवम् “संक्रांतावपि कौंतेय तथा स्वाम्युदयेषु च । कुर्वन्बृहस्पतेः
पूजामभीष्टफलमाप्नुयात् ॥” एवं संकटे चतुर्थद्वादशस्थो गुरुर्द्विवारमष्टमस्त्रिवारं होमादिरूपपूजयार्चितः शुभः॥
इति संस्कारप्रकाशे गुरुपूजाप्रयोगः समाप्तः ॥ अथ वरस्य रविशुद्धिप्रकारः ॥ राजमार्तण्डे ॥ “तृतीयषष्ठग
श्चैव दशमैकादशस्थितः ॥ रविः शुद्धो निगदितो वरस्यैव करग्रहे ॥ जन्मस्थे च द्वितीयस्थे पंचमे सप्तमेऽपि वा॥
कां० ४ नवमे भास्करे पूजां कुर्यात्पाणिग्रहोत्सवे ॥ चतुर्थे वाष्टमे चैव द्वादशे भास्करे स्थिते । वरः पंचत्वमाप्नोति कृते
पाणिग्रहोत्सवे॥” अथात्यावश्यके चतुर्थादिस्थरविशुद्धिः ज्योतिर्निबंधे॥ उच्चराशिगतो भानुरुच्चराशिगतो गुरुः॥
रिष्फा १२ ष्ट ८ तुर्य ४ गोऽपीष्टो नीचारिस्थः शुभोऽप्यसत् ॥ द्विरर्च्यो द्वादशस्तुर्योऽथाष्टमस्त्रिगुणार्चनात् ॥
अथ रविपूजाप्रयोगः ॥ विवाहात्पूर्वदिने चंद्रताराद्विबलान्विते वा शुभदिने । वरपिता प्रातर्नित्यकर्म कृत्वा

पत्नीपुत्रान्वितः स्वासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्य पुत्रस्य विवाहे जन्मराशेः सकाशादमुकानिष्टस्थानस्थितसूर्येण सूचितं सूचयिष्यमाणं च यत्सर्वारिष्टं तद्विनाशार्थं सर्वदा तृतीयैकादशशुभस्थानस्थितवदुत्तमफलप्राप्त्यर्थमायुरारोग्यार्थं श्रीसूर्यनारायणप्रसन्नतार्थं च रविपूजां करिष्ये। इति संकल्प्य तदंगत्वेन गणपतिपूजनं पुण्याहवाचनमाचार्यवरणं च पूर्ववत्कुर्यात् ॥ ततः कुंडे स्थंडिले वा पंचभूसंस्कारपूर्वकमग्निं प्रतिष्ठाप्य वेदिमध्ये तंडुलैरष्टदलं कृत्वा तत्र ताम्रकलशं यथाविधि संस्थाप्य तदुपरि ताम्रपात्रे शुद्धसुवर्णमयीं सूर्यप्रतिमामग्न्युत्तारणपूर्वकं सन्निधाय रक्तपट्टवस्त्रयुगच्छन्नां छत्रोपानद्युगान्वितां च कृत्वा पुरुषसूक्तेन आवाहनासनपाद्यार्घ्याचमनपंचामृतस्नानरक्तवस्त्रयज्ञोपवीतरक्तचंदनरक्तपुष्पाक्षतधूपदीपनैवेद्यतांबूलफलदक्षिणादिभिः संपूज्य लड्डुकान्निवेद्य प्रणमेत्॥ ततः कुशकंडिकां कृत्वा आज्यभागांते दधिक्षीरघृताक्ताश्चरुसाकल्यहिताः प्रादेशमात्राः अर्कसमिधः ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ॥ हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्स्वाहा। इदं सूर्याय १०८ इति

सं०प्र० मंत्रेणाष्टोत्तरशतसंख्यया जुहुयात् ॥ ततो होमांते पुनः रक्तगंधाक्षतपुष्पादिभिः सूर्यं संपूज्य स्विष्टकृदादि
७९ प्राजापत्यांतं होमं पूर्ववत्कृत्वादिक्पालेभ्यो बलीन्दत्त्वा पूर्णाहुतिहोमं कुर्य्यात् ॥ एवं होमशेषं समाप्य ब्रह्मणे
पूर्णपात्रदानम् । त्र्यायुषकरणादि कर्म्म कृत्वा ततः जलपूर्णे ताम्रकुंभे मंजिष्ठाम् । गजमदम् । कुंकुमम् । रक्तचंदनं
च क्षिप्त्वा वारुणैमंत्रैरभिषिच्य स्नानं कुर्य्यात् ॥ ततो देशकालौ स्मृत्वा अद्य करिष्यमाणविवाहे ममास्य पुत्रस्य
जन्मराशेः सकाशादमुकस्थानस्थितसूर्यजनितानिष्टफलनिवृत्त्यर्थमायुरारोग्यप्राप्त्यर्थं श्रीसवितृसूर्य्यनारा
यणप्रसन्नतार्थमिमां सूर्य्यप्रतिमां सोपस्कराममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे । इति
कां० ४ संकल्प्य "ॐ आदिदेव नमस्तुभ्यं सप्तसप्ते दिवाकर ॥ त्वं रवे तारयस्वास्मानस्मात्संसारसागरात् ॥ १ ॥"
इति मंत्रेण विप्रहस्ते प्रतिमां कुंभवस्त्रसहितां दद्यात् ॥ ॐ स्वस्तीति प्रतिवचनम् ॥ ततः सूर्य्यदानम् " कौसुं
भवस्त्रं गुडहेमताम्रं माणिक्यगोधूमसुवर्णपद्मम् ॥ सवत्सगोदानमिति प्रणीतं दुष्टाय सूर्य्याय मसूरिकाश्च
॥ १ ॥" एतानि दानद्रव्याणि संकल्प्य विप्रेभ्यो दद्यात् ॥ तत आचार्यादिभ्यो दक्षिणां दत्त्वा यथाशक्ति ब्राह्म

णान्संभोज्य कर्म्मपूर्तिकामो विष्णुं स्मरेत् ॥ एवम् । " सूर्यपीडासु घोरासु कृता शांतिः शुभप्रदा ॥ " इति संस्कारप्रकाशे रविपूजाप्रयोगः॥ अथ चंद्रपूजाप्रयोगः॥ विवाहपूर्वदिने प्रातःस्नानादि विधाय देशकालौ संकीर्त्य ममास्य पुत्रस्य कन्याया वा करिष्यमाणविवाहे जन्मराशेः सकाशाच्चतुर्थाद्यनिष्टस्थानस्थितचंद्रेण सूचितं सूचयिष्यमाणं च यत्सर्वारिष्टं तद्विनाशार्थं सर्वदा तृतीयैकादशशुभस्थानस्थितवदुत्तमफलप्राप्त्यर्थमायुरारो । ग्यार्थं श्रीभगवच्चंद्रप्रसन्नतार्थं चंद्रपूजां करिष्ये। इति संकल्प्य गणपतिपूजनं पुण्याहवाचनमाचार्यादिवरणं च पूर्ववत्कृत्वा स्थंडिले पंचभूसंस्कारपूर्वकमग्निस्थापनं कुर्य्यात् ॥ ततो मंडलमध्ये दध्यन्नशिखरे राजतं कुंभं तदभावे कांस्यमयं वा धवलं मृन्मयकलशं यथाविधि महीद्यौरित्यादिमंत्रैः संस्थाप्य तदुपरि श्वेतपट्टवस्त्रं प्रसार्य्य तत्र कांस्यपात्रे तंडुलपूरिते चंद्रप्रतिमां पलमात्रामर्द्धचंद्राकारामग्न्युत्तारणपूर्वकं सन्निधाय श्वेतवस्त्र युगलेन संवेष्ट्य पादुकोपानहच्छत्रभोजनासनसंयुतं च कृत्वा पंचामृतश्वेतचंदनाक्षतपुष्पादिभिः पुरुषसूक्तेन षोडशोपचारैः संपूज्य घृतपायसं निवेदयेत् ॥ ततः कुशकंडिकां कृत्वा आघाराज्यभागांते चंद्रमसे दधिम

सं०प्र० धुक्षीरघृताक्ताःचरुशाकल्यसहिताः पलाशसमिधोष्टोत्तरशतं"इमं देवा"इति मंत्रेण जुहुयात् ।ॐ इमं देवाऽअस
८० पत्नर्ठसुबद्धम्महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्ज्यायेन्द्रस्येन्द्रियाय॥इममुमुष्यं पुत्रममुष्यै' पुत्रमस्यै
विशऽ एष वाऽमी राजा सोमोऽस्माकम्ब्राह्मणानाᳬराजा स्वाहा । इदं चंद्रमसे॥१०८॥ ततो होमांते पुनः श्वेत
गंधादिभिश्चंद्रं संपूज्य । स्विष्टकृदादिप्राजापत्यांतं होमं समाप्य दिक्पालेभ्यो माषभक्तबलीन्दत्वा पूर्णाहुतिं
त्र्यायुषकरणादि च कर्म्म कुर्य्यात् ॥ ततो राजते कुंभे । उशीरम् शिरीषम् कुंकुमं श्वेतचंदनं शंखं च न्यस्य
वारुणैर्मंत्रैरभिषेकं स्नानं च कृत्वा आचार्याय सोपस्करां चंद्रप्रतिमाम् "ॐ महादेव जातिवल्लीपुष्पगोक्षीरपां
कां० ४ डुर ॥ सोमसौम्योभवास्माकं सर्वदा ते नमोनमः ॥ १ ॥" इति मंत्रेण दद्यात् ॥ ततः चंद्रदानम् ॥ "घृतकलशं
सितवस्त्रं दधि शंखं मौक्तिकं सुवर्णं च ॥ रजतं च प्रदद्याच्चंद्रारिष्टोपशांतये त्वरितम् ॥१॥"एतानि दानद्रव्याणि
संपाद्य संकल्प्य विप्राय दद्यात् ॥ ततो दक्षिणादानं ब्राह्मणभोजनादि सर्वं कर्म्म पूर्ववत्समापयेत् ॥ एवंकृते
महासौम्यः सोमस्तुष्टिकरो भवेत् ॥ इति संस्कारप्रकाशे चंद्रपूजाप्रयोगः ॥ ॥ अथ विवाहपूर्वकृत्यम् ॥

विवाहदिनात्पूर्वं तृतीयषष्ठनवमरहितान्यशुभदिने विवाहनक्षत्रादियुते चंद्रताराऽनुकूले वधूवरयोर्विवाहांगमंगल कार्यं कुर्यात् ॥ तथा च "हेरंबपूजनं तैलहरिद्रां चांकुरार्पणम् ॥ पेषणं कंडनाद्यं च वेदिकामंडपादिकम् ॥ यवार कुंकुमादिश्च लड्डुका व्यंजनादिकम् ॥" इति । ततो विवाहदिनात्पूर्वदिने स्वेस्वे गृहे कन्यापिता वरपिता च सपत्नीकः कन्यापुत्राभ्यां सह मंगलं स्नात्वा अहतवासांस्यलंकारांश्च परिधाय धृतकुंकुमादिमंगलतिलको बहिः शालायां शुभासने उपविश्य स्वदक्षिणतः पत्नीं तद्दक्षिणतः संस्कार्यं चोपवेश्य आचम्य प्राणानायम्य वरपिता देशकालौ संकीर्त्य अस्यामुकशर्मणःमम पुत्रस्य देवपितृऋणापाकरणधर्मप्रजोत्पादनसिद्धिद्वारा श्रीपरमेश्वर प्रीत्यर्थं श्वः करिष्यमाणविवाहाख्यं संस्कारकर्माहं करिष्ये। तदंगत्वेन निर्विघ्नतार्थं गणपतिपूजनं स्वस्ति पुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं चाद्य करिष्ये इति च संकल्प्य पूर्ववत्सर्वं कुर्यात् ॥ एवं कन्यापितापि विवाहांगविहितं निर्विघ्नतार्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं च प्रथमकाण्डोक्तं सर्वं कुर्यात् ॥ ग्रहानुकुलतासिद्धये ग्रहमखं चोभयपक्षे कुर्य्यात् ॥ इति पूर्वदिनकृत्यम् ॥ अथ विवाहपद्धतिः ॥

सं० प्र० तत्रादौ विवाहादिने तत्पूर्वदिने वा कन्यापिता प्रातर्मातृपूजापूर्वकं नांदीमुखं श्राद्धं विधाय गृहागतं वरमभ्यु
८१ त्थानादिभिः प्रतीक्ष्य विवाहसमये स्नात्वा शुचिः अहतशुक्लवाससी परिधाय ॥ अर्हणवेलायां मंडपे शुभवस्त्रा
च्छादिते पीठे वरं प्राङ्मुखमुपवेशयेत् ॥ ततो दाता स्वासने उदङ्मुखः प्रत्यङ्मुखो वा उपविश्य आचम्य
प्राणानायम्य ॥ आ नो भद्रा इत्यादिशांतिपाठं पठित्वा ॥ ॐ श्रीमन्महागणाधिपतये नमः ॥ ॐलक्ष्मी
नारायणाभ्यां नमः ॥ ॐ उमामहेश्वराभ्यां नमः॥ ॐ शचीपुरंदराभ्यां नमः ॥ ॐ वाणीहिरण्यगर्भाभ्यां नमः ॥
ॐ मातापितृचरणकमलेभ्यो नमः ॥ ॐ इष्टदेवताभ्यो नमः॥ ॐ ग्रामदेवताभ्यो नमः ॥ ॐ कुलदेवताभ्यो
कां० ४ नमः ॥ ॐ सूर्य्यादिग्रहेभ्यो नमः ॥ ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमः॥ इति नत्वा ॥ ॐ पुण्यं पुण्याहं दीर्घमा
युरस्तु इति पठेत् ॥ ततः कन्यायाः जातकर्मादिसंस्कारलोपप्रायश्चित्तं कुर्यात् ॥ तद्यथा ॥ दक्षिणहस्ते यथा
शक्ति हिरण्यादिद्रव्यं जलादीनि चादाय।ॐ तत्सदद्य श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य
ब्रह्मणो द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे तत्प्रथमचरणे

जंबूद्वीपे भरतखण्डे तत्रापि परमपवित्रे भारते वर्षे आर्यावर्त्तांतर्गतब्रह्मावर्तैकदेशे श्रीगंगायमुनयोरमुकदिग्भागे श्रीगोदावर्याश्चामुकादिग्भागे नर्मदाया उत्तरे बौद्धावतारे अमुकनामसंवत्सरे अमुकायने अमुकर्तौअमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकराशिस्थिते चंद्रे अमुकराशिस्थिते सूर्ये अमुकामुकेषु देवगुर्वादिषुशेषेषु ग्रहेषु यथास्थानस्थितेषु एवंग्रहगणविशिष्टायां तिथौ अमुकगोत्रोऽमुकशर्माहं मम अस्याः कन्यायाः गर्भाधानादिचूडांतसंस्कारलोपजन्यप्रत्यवायपरिहारार्थं प्रतिसंस्कारमर्धं कृच्छ्रं चूडायाः कृच्छ्रं तत्प्रत्याम्नायगोनिष्क्रयीभूतं यथाशक्ति इदं हिरण्यमग्निदैवतं (वा रजतं चंद्रदैवतम्) अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे। इति साक्षतोदकसहितं द्रव्यं ब्राह्मणाय दद्यात् ॐ स्वस्तीति प्रतिवचनम् ॥ तत आचम्य पुनर्देशकालौ स्मृत्वा मम अस्याः कन्यायाः भर्त्रा सह धर्म्मप्रजोत्पादनगृह्यपरिग्रहधर्म्माचरणेष्वधिकारासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं विवाहाख्यं संस्कारं करिष्ये।तदंगतया विहितं निर्विघ्नतार्थं श्रीगणपतिपूजनं स्वस्तिपुण्याहवाचनं ग्रहपूजनं कुलदेवतापूजनं कलशस्थापनं दिग्रक्षणं च करिष्ये। इति च संकल्प्य। गण

सं० प्र० पत्यादिपूजनं कुर्यात् ॥ अथ गणेशपूजनम्॥ॐसुमुखश्चैकदन्तश्च कपिलो गजकर्णकः।लंबोदरश्च विकटो विघ्न
८२ नाशो विनायकः ॥ १ ॥ धूम्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥
॥ २ ॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ॥ संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ ३ ॥ शुक्लांबरधरं
देवं शशिवर्णं चतुर्भुजम् ॥ प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ ४ ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः
सुरासुरैः॥सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥५॥सर्वमंगलमांगल्ये शिवे सर्वार्थसाधिके॥शरण्ये त्र्यंबके गौरि
नारायणि नमोऽस्तु ते ॥६॥ सर्वदा सर्वकार्येषु नास्ति तेषाममंगलम् ॥ येषां हृदिस्थो भगवान्मंगलायतनं हरिः
का० ४ ॥ ७ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ॥ येषामिंदीवरश्यामो हृदयस्थो जनार्दनः ॥ ८ ॥ विनायकं
गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् ॥ सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये ॥ ९ ॥ सर्वेष्वारंभकार्येषु त्रयस्त्रिभुवने
श्वराः ॥ देवा दिशंतु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ १० ॥ वक्रतुंड महाकाय सूर्य्यकोटिसमप्रभ ॥ निर्विघ्नं
कुरु मे देव सर्वकार्येषु सर्वदा ॥ ११ ॥ ( हस्ते पुष्पाण्यादाय ) श्वेताङ्गं श्वेतवस्त्रं सितकुसुमगणैः पूजितं

श्वेतगंधैः क्षीराब्धौ रत्नदीपैः सुरतरुविमले रत्नसिंहासनस्थम् ॥ दोर्भिः पाशाङ्कुशेष्टाभयधृतिविशदं चंद्रमौलिं त्रिनेत्रं ध्यायेच्छांत्यर्थमीशं गणपतिममलं श्रीसमेतं प्रसन्नम् ॥ इति ध्यानम् ॥ हे हेरंब त्वमेह्येहि अंबिकात्र्यंबकात्मज ॥ सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभ पितुः पितः ॥ १ ॥ नागास्य नागहार त्वं गणराज चतुर्भुज ॥ भूषितः स्वायुधैर्दिव्यैः पाशांकुशपरश्वधैः ॥२॥ आवाहयामि पूजार्थं रक्षार्थं च मम क्रतौ ॥ इहागत्य गृहाण त्वं पूजां क्रतुं च रक्ष मे ॥ ३ ॥ ॐ गुणानांन्त्वा गुणपतिर्ठं हवामहे प्रियाणांन्त्वाप्रियपतिर्ठं हवामहे निधीनान्त्वा निधिपतिर्ठंहवामहे वसो मम ॥ आहमंजानि गर्भधमा त्वमंजासि गर्भधम् ॥ १ ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः गणपतिमावाहयामि ॥ इत्यावाहयेत् ॥ ॐ पुरुषऽएवेदर्ठं सर्वं यद्भूतं यच्च भाव्यम् । उतामृतत्वस्येशांनो यदन्नें नातिरोहति ॥ २ ॥ ॐ भू० सिद्धि० महागणपतये नमः आसनं समर्प यामि ॥ इत्यासनं दद्यात् ॥ ॐ एतावानस्य महिमातो ज्यायाँश्च पूरुषः ॥ पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥ ॐ भू० सिद्धि० महागणपतये नमः पादयोः पाद्यं स० ॥ इति पाद्यम् ॥ ॐ त्रिपादूर्ध्वऽ

सं०प्र० उदैत्पुरुषः पादोस्येहाभवत्पुनः ॥ ततो विष्वङ्व्यक्रामत्साशनानशने अभि ॥४॥ ॐ भू० सिद्धि०महागणपतये
 नमः अर्घ्यं स० ॥ इत्यर्घ्यम् ॥ ॐ ततो विराडजायत विराजो अधिपूरुषः ॥ स जातो अत्यरिच्यत पश्चाद्भू
मिमथो पुरः ॥५॥ ॐ भू० सिद्धि० महागणपतये नमः आचमनं स०॥ इत्याचमनम् ॥ ॐ वरुणस्योत्तम्भनमसि
वरुणस्य स्कम्भसर्जनी स्थो वरुणस्य ऋतसदन्यासि वरुणस्यऽऋतसदनमसि वरुणस्यऽ ऋतसदनमासीद
॥६॥ ॐ भू० सिद्धि० महागणपतये० स्नानं स० ॥इति स्नानम्॥ ॐ पंचनद्यः सरस्वतीमपि यन्ति सस्रोतसः। सरस्वती
तु पंचधा सो देशे भवत्सरित् ॥ ७ ॥ ॐ भू० सिद्धि० महागणपतये० पंचामृतस्नानं स०॥ पुनः शुद्धोदकस्नानम् ॥
कां० ४ ॐ युवा सुवासाः परिवीतऽआगात्सऽउश्रेयान्भवति जायमानः। तं धीरासः कवयऽउन्नयन्ति स्वाध्यो३ मनसा देव
यन्तः ॥ ८ ॥ ॐ भू० सिद्धि० महागणपतये० वस्त्रं स० ॥ इति रक्तवस्त्रम् ॥ तत आचमनम् ॥ ॐ यज्ञोपवीतं
परमं पवित्रं पजापतेर्यत्सहजम्पुरस्तात् ॥ आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ ९ ॥
ॐ भू० सिद्धि० महागणपये० यज्ञोपवीतं स० ॥ इति यज्ञोपवीतम् ॥ आचमनम् ॥ ॐ गंधद्वारां दुराधर्षां नि

त्यपुंष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ १० ॥ ॐ भू० सिद्धि० महागणपतये नमः
गंधं स० ॥ इति कुंकुमम् ॥ ॐ अक्षन्नमीमदन्त ह्यवं प्रिया अधूषत । अस्तोषत स्वभानवो विप्रानविष्ठया
मती योजान्विन्द्रते हरिं ॥ ११ ॥ ॐ भू०सि० महागणपतये०अक्षतान्स० ॥ इत्यक्षताः ॥ ॐ श्रीश्चं ते
लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मं
इषाण ॥ १२ ॥ ॐ भू० सि० महागणपतये० पुष्पाणि स० इति पुष्पाणि ॥ ॐ काण्डात्काण्डात्प्ररोहन्ती
परुषः परुषस्परिं ॥ एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥१३॥ ॐ भू० सि० महागणपतये० दूर्वांकुरान्स० ॥
इति दूर्वांकुराः॥ ॐ धूरसि धूर्वधूर्वतं धूर्वतं योस्मान्धूर्वति तं धूर्वयंवयं धूर्वामः ॥ देवानामसि वह्नितमं सस्नितमं
पप्रितमं जुष्टतमं देवहूतमम् ॥१४॥ ॐ भू०सि० महागणपतये०धूपं स० इति धूपः ॥ ॐ अग्निर्ज्योतिर्ज्योति
रग्निः स्वाहा सूर्यो ज्योति ज्योतिः सूर्यः स्वाहा॥अग्निर्वर्च्चो ज्योतिर्वर्च्चः स्वाहा सूर्यो वर्च्चो ज्योतिर्वर्च्चः स्वाहा॥
ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥ १५ ॥ॐ भू० सि० महागणपतये० दीपं स० ॥ इतिदीपः ॥ ॐनाभ्याऽ

सं० प्र० आसीदुन्तरिक्षठं शीर्ष्णो द्यौः समवर्त्तत ॥ पुद्भ्याम्भूमिर्दिशुः श्रोत्रात्तथा लोकाँ२ अंकल्पयन् ॥ १६ ॥ ॐ
८४ भू० सि० महागणपतये० नैवेद्यं स०॥ इति नैवेद्यम् ॥ तत आचमनम् ॥ ॐ याः फुलिनीर्याऽअंफुलाऽअंपुष्पा याश्च
पुष्पिणीः॥ बृहस्पति प्रसूतास्ता नो मुंचन्त्वर्ठंहसः॥१७॥ॐ भू० सि० महागणपतये० पूगीफलं स०॥इति पूगीफलं
ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ॥ स दाधार पृथिवीं द्यामुतेमाङ्कस्मै देवाय हविषा
विधेम ॥ १८ ॥ ॐ भू० सि० महागणपतये० दक्षिणां स० ॥ इति दक्षिणा ॥ अथ विशेषार्घ्यम् ॥ रक्षरक्ष
गणाध्यक्ष रक्ष त्रैलोक्यरक्षक ॥ भक्तानामभय कर्ता त्राता भव भवार्णवात् ॥ १ ॥ द्वैमातुर कृपासिंधो षाण्मा
का० ४ तुराग्रज प्रभो ॥ वरद त्वं वरं देहि वांछितं वांछितार्थद ॥ २ ॥ गृहाणार्घ्यमिदं देव सर्वलोकनमस्कृत ॥ अनेन
सफलार्घ्येण फलदोस्तु सदा मम ॥ ३ ॥ ॐ भू० सिद्धि० महागणपतये नमः विशेषार्घ्यं समर्पयामि ॥ इति
विशेषार्घ्यम् ॥ अथ प्रार्थना ॥ विघ्नेश्वराय वरदाय सुरप्रियाय लंबोदराय सकलाय जगद्धिताय ॥ नागाननाय
श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमोनमस्ते ॥ १ ॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभ

दाय सुरेश्वराय ॥ विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमोनमस्ते ॥ २ ॥ त्वां विघ्नशत्रुदल
नेति च सुंदरेति भक्तप्रियेति सुखदेति वरप्रदेति॥विद्याप्रदेत्यघहरेति च ये स्तुवंति तेभ्यो गणेश वरदो भवनित्य
मेव ॥ ३ ॥ अनया पूजया सिद्धिबुद्धिसहितमहागणपतिः सांगः सपरिवारः प्रीयताम् ॥ इति गणपतिपूजनम् ॥
अथ कलशस्थापनम् ॥ भूरसीति भूमिं स्पृष्ट्वा॥भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ॥
पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं माहिꣳसीः॥१॥धान्यमसीति धान्यं क्षिप्त्वा॥ॐ धान्यमसि धिनुहि देवान्प्रा
णाय त्वो दानाय त्वा व्यानाय त्वा दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः॥प्रति गृभ्णात्वच्छि
द्रेण पाणिना चक्षुषे त्वा महीनाम्पयोसि॥२॥आजिघ्रेति कलशं स्थापयेत् ॥ ॐ आजिघ्र कलशं मह्या त्वा विशं
त्विन्दवः पुनरूर्ज्जा निवर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्म्मा विशताद्रयिः ॥३॥ वरुणस्योत्तंभमिति
जलं पूरयेत्।ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कंभसर्ज्जनी स्थो वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसद
नमसि वरुणस्यऽऋतसदनमासीद॥४॥वसोः पवित्रमिति रक्तवस्त्रं कंठे वेष्टयेत् ॥ ॐ वसोः पवित्रमसि शतधारं

सं० १० वसोः पवित्रमसि सहस्रं धारम् ॥ देवस्त्वां सविता पुनातु वसोः पवित्रेण शुतधारेण सुप्वा कामधुक्षः ॥५॥ गंधद्वा
८५ रेति गंधं । ॐ गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥६॥ याऽओ
षधीरिति सर्वौषधीः ॐ याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्पुरा ॥ मनैनुबभ्रूणामुहठंशतं धामानि सप्त च
॥ ७ ॥ काण्डात्काण्डादिति दूर्वाः ॥ ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ॥एवा नो दूर्वे प्रतनु सहस्रेण
शतेन च ॥८॥ अश्वत्थे व इति पंचपल्लवान् ॥ ॐ अश्वत्थे वो निषदनम्पर्णेवो वसतिष्कृता ॥ गोभाजऽइत्किला
सथ यत्सनवथ पूरुषम् ॥ ९ ॥ स्योनापृथिवीति सप्तमृदः ॥ ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥
कां० ४ यच्छा नः शर्म सप्रथाः ॥ १० ॥ याः फलिनीरिति पूगीफलम् ॥ ॐ याः फलिनीर्याऽअ फलाऽअ पुष्पा याश्च
पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वठंहसः ॥ ११ ॥ परिवाजेति पंच रत्नानि ॥ ॐ परिवाजपतिः
कविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानि दाशुष ॥ १२ ॥ हिरण्यगर्भेति हिरण्यम् ॥ ॐ हिरण्यगर्भः समवर्त
ताग्रे भूतस्य जातः पतिरेकऽ आसीत् ॥ स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १३ ॥

पूर्णादर्वीति पूर्णपात्रमुपरि न्यसेत् ॥ ॐ पूर्णा दर्वि परापत सुपूर्णा पुनरापत ॥ वस्नेव विक्रीणावहा ऽइषमुर्ज्जर्ठ शतक्रतो ॥ १४ ॥ श्रीश्च त इति नारिकेलं च कलशोपरि स्थापयेत् ॥ तत ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टं यज्ञर्ठसमिमं दधातु ॥ विश्वेदेवासऽइह मादयन्तामो ३ प्रतिष्ठ ॥ १ ॥ इति मंत्रेण प्रतिष्ठां कृत्वा । ॐ तत्त्वायामि ब्रह्मणा वंदमानस्तदाशास्ते यजमानो हविर्भिः॥अहेडमानो वरुणेह बोध्युरुशर्ठं सुमानऽआयुः प्रमोषीः ॥१॥ ॐ भूर्भुवः स्वः वरुणं सांगं सपरिवारमावाहयामि स्थापयामि । इत्यक्षतान्विकीर्य्य । ॐ अपांपतिवरुणाय नमः ॥ इति मंत्रेण षोडशोपचारैः पूजयेत् ॥ ततो गंगाद्यावाहनम् ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥ आयांतु मम शांत्यर्थं दुरितक्षयकारकाः ॥ १ ॥ ततः कलशाभिमंत्रणम् ॥ कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः ॥ मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ २ ॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुंधरा ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥ ३ ॥ प्रार्थना ॥ देवदानवसंवादे मथ्यमाने महोदधौ ॥ उत्पन्नोसि यदा कुंभ विधृतो विष्णुना

सं०१० स्वयम् ॥ ४ ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ॥ त्वयि तिष्ठंते भूतानि त्वयि प्राणाः प्रति
८६ ष्ठिताः ॥ ५ ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ॥ आदित्या वसवो रुद्रा विश्वेदेवाः सपि
तृकाः ॥ ६ ॥ त्वयि तिष्ठंति सर्वेऽपि यतः कामफलप्रदाः ॥ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव
॥ ७ ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ इति कलशस्थापनप्रयोगः ॥ अथ स्वस्तिपुण्याह
वाचनम् ॥ तत्रादौ ब्राह्मणानां हस्ते सुप्रोक्षितमस्तु । ॐ शिवा आपः संतु इति जलम् । ॐ संतु
शिवा आप इति प्रतिवचनम् ॥ ॐ सौमनस्यमस्तु इति पुष्पाणि । ॐ अस्तु सौमनस्यमिति प्रतिवचनम् ॥
कां० ४ [ एवं सर्वत्र प्रतिवचनम् ] ॐ अक्षतं चारिष्टं चास्तु ॥ ॐ अस्त्वक्षतमरिष्टं च ॥ ॐ गंधाः पांतु ॥ ॐ सौमं
गल्यं चास्तु ॥ ॐ अक्षताः पांतु ॥ आयुष्यमस्तु ॥ ॐ पुष्पाणि पांतु सौश्रियमस्तु ॥ ॐ तांबूलानि पांतु ॥
ॐ ऐश्वर्य्यमस्तु ॥ ॐ दक्षिणाः पांतु ॥ ॐ बहुधनमस्तु ॥ ॐ पुनरत्नाः पांतु ॥ ॐ स्वार्चितमस्तु ॥ इति सुप्रो
क्षितकरणम् ॥ ततः ॥ ॐ पुण्याहकालान्वाचयिष्ये ॥ इति यजमानः ॥ ॐ वाच्यतामिति विप्राः ॥ ब्राह्यं

पुण्यं महद्यच्च सृष्ट्युत्पादनकारकम् । वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवंतु नः ॥ १ ॥ भो ब्राह्मणाः मम कन्यायाः क्रियमाणस्य विवाहाख्यसंस्कारकर्मणः पुण्याहं भवंतो ब्रुवंतु । ॐ पुण्याहं ३ इति त्रिर्विप्राः ॥ ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियं ॥ पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मां ॥ १ ॥ पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम् । ऋषिभिः सिद्धगंधर्वैस्तत्कल्याणं ब्रुवंतु नः ॥ १ ॥ भो ब्राह्मणा मम कन्यायाः क्रियमाणस्य विवाहाख्यस्य संस्कारकर्मणः कल्याणं भवंतो ब्रुवंतु ॥ ॐ कल्याणमिति त्रिः ॥ ३ ॥ ॐ यथेमां वाचं कल्याणीमावदानि जनेभ्यः ॥ ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय च ॥ प्रियो देवानां दक्षिणायै दातुरिह भूयासमयम्मे कामः समृध्यतामुपमादो नमतु ॥ २ ॥ सागरस्य यथा वृद्धिर्महालक्ष्म्यादिभिः कृता ॥ संपूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवंतु नः ॥ १ ॥ भो ब्राह्मणाः मम कन्यायाः क्रियमाणस्य विवाहाख्यस्य संस्कारकर्मणः ऋद्धिं भवंतो ब्रुवंतु ॐ ऋध्यताम् ॥ ३ ॥ ॐ सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृताऽ अभूम ॥ दिवम्पृथिव्याऽ अध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः ॥ ३ ॥ स्वस्तिस्तु याऽविनाशाख्या

सं०प्र० पुण्यकल्याणवृद्धिदा ॥ विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवंतु नः ॥ १ ॥ भो ब्राह्मणा मम कन्यायाः क्रिय
८७ माणस्य विवाहाख्यस्य संस्कारकर्मणः स्वस्ति भवंतो ब्रुवंतु ॥ ॐ स्वस्ति ॥ ३ ॥ ॐ स्वस्ति नऽ इन्द्रो वृद्ध
श्रवाः स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्योऽ अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ ४ ॥ समु
द्रमथनाज्जाता जगदानंदकारिका ॥ हरिप्रिया च मांगल्या तां श्रियं च ब्रुवंतु नः ॥ १ ॥ भो ब्राह्मणाः मम
कन्यायाः क्रियमाणस्य विवाहाख्यस्य संस्कारकर्मणः श्रीरस्तु । इति भवंतो ब्रुवंतु ॥ ॐ अस्तु श्रीरिति
त्रिर्विप्राः ॥ ३ ॥ ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाण
कां० ४ मुम्मऽ इषाण सर्वलोकम्मं इषाण ॥ ५ ॥ अस्मिन्पुण्याहवाचने न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां
वचनात् श्रीमहागणपतिप्रसादाच्च सर्वः परिपूर्णोऽस्तु ॥ ॐ अस्तु परिपूर्णः ॥ अनेन पुण्याहवाचनेन प्रजापतिः
प्रीयताम् ॥ इति पुण्याहवाचनम् ॥ अथ नवग्रहपूजनम् ॥ तत्रादौ कुलदेवतावाहनम् ॥ पुष्पाण्यादाय ग्रहमंडले
सूर्यपरितः प्रदक्षिणक्रमेण ॥ ॐ ब्रह्म जज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचो वेनऽ आवः ॥ स बुध्न्याऽ उपमा

अस्य विष्टाः सुतश्च योनिमसंतश्च विवं ॥ ॐ भूर्भुवः स्वर्ब्रह्मन्निहागच्छ इह तिष्ठ ॥ १ ॥ ॐ विष्णो रराटमसि
विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि वैष्णवमसि विष्णवे त्वा ॥ ॐ भू० विष्णो इह॥ २ ॥ॐ नमः
शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥ ॐ भू० शिव
इहा० ॥ ३ ॥ ॐ श्रीश्च ते लक्ष्मीश्च पत्न्या वहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाण
मुम्म इषाण सर्वलोकम्मऽ इषाण ॥ भू० लक्ष्मीहा० ॥ ४ ॥ ॐ पंच नद्यः सरस्वतीमपियन्ति सस्रोतसः
सरस्वती तु पंचधासोद्देशेभवत्सरित् ॥ ॐ भू० सरस्वतीहा० ॥ ५ ॥ ॐ अम्बे अम्बिकेऽम्बालिके न मान
यति कश्चन ॥ ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥ ॐ भू० गौरीहा० ॥ ६ ॥ ॐ नहिस्पशुमविद
न्नन्यमस्माद्वैश्वानरात्पुर एतारमग्नेः एमेनमवृधन्नमृता ॥ अमर्त्यं वैश्वानरं क्षेत्रजित्याय देवाः ॥ ॐ भू०
क्षेत्रपाल इहा० ॥ ७ ॥ ( अथ सूर्यादिग्रहावाहनम् । ) ॐ आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यंञ्च ॥
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ ॐ भूर्भुवः स्वः सूर्य इहागच्छ इह तिष्ठ ॥ १ ॥ ॐ

सं०प्र० इमं देवाऽअसपत्नꣳ सुवध्वम्महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय ॥ इममुमुष्य
८८ पुत्रममुष्यै पुत्रमस्यै विशऽएष वोऽमी राजा सोमोऽस्माकम्ब्राह्मणानाꣳ राजा॥ॐ भू०चंद्र इहा०॥२॥ॐ अग्नि
र्म्मूर्द्धादिवः ककुत्पतिः पृथिव्याऽअयम् ॥ अपाꣳ रेताꣳसि जिन्वति ॥ ॐ भू० भौम इहा० ॥ ३ ॥ ॐ उद्बु
ध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सꣳसृजेथामयञ्च ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवा यजमानश्च
सीदत ॥ ॐ भू० बुध इहा० ॥ ४ ॥ ॐ बृहस्पतेऽअति यदर्य्योऽअर्हा द्युमद्विभाति क्रतुमज्जनेषु ॥ यद्दी दय
च्छवसऽऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ ॐ भू० बृहस्पते इहा० ॥ ५ ॥ ॐ अन्नात्परिस्रुतो रसं
कां० ४ ब्रह्मणा व्यपिबत्क्षत्रम्पयः सोमम्प्रजापतिः ऋतेन सत्यमिन्द्रियं विपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्प
योऽमृतम्मधु ॥ ॐ भू० शुक्र इहा० ॥ ६ ॥ ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ॥ शँय्योरभिस्रवन्तु
नः ॥ ॐ भू० शनैश्चर इहा० ॥ ७ ॥ ॐ कया नश्चित्रऽआभुवदूती सदावृधः सखा ॥ कया शचिष्ठया
वृता ॥ ॐ भू० राहो इहा० ॥ ८ ॥ ॐ केतुं कृण्वन्नकेतवे पेशो मर्य्याऽअपेशसे ॥ समुषद्भिरजायथाः ॥

मूर्भु० केतो इहा० ॥९॥ ॐ त्र्यंबकं यजामहे सुगंधिम्पुष्टिवर्धनम् ॥ उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय
माऽमृतात् ॥ ॐ भू० त्र्यंबक इहा०॥१०॥ ॐ जयंती मंगला काली भद्रकाली कपालिनी ॥ दुर्गा क्षमा शिवा
धात्री स्वाहा स्वधा नमोस्तु ते ॥ ॐ भूर्भुवः स्वः कुलदेवते इहा० ॥११॥ ॐ अग्निर्देवता वातो देवता सूर्यो
देवता चंद्रमा देवता वसवो देवता रुद्रा देवता दित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्देवतेंद्रो
देवता वरुणो देवता ॥ ॐ भूर्भुवः स्वः सर्वे देवा इहागच्छत इह तिष्ठत ॥ १२ ॥ इत्यावाह्य । ॐ मनोजूतिर्जु
षतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳसमिमं दधातु ॥ विश्वेदेवासऽइह मादयन्तामो ३ म्प्रतिष्ठ ॥
॥ १ ॥ इति मंत्रेण प्रतिष्ठाप्य । ॐ ब्रह्मादिकुलदेवताभ्यो नमः ॥ ॐ सूर्य्यादिग्रहेभ्यो नमः ॥ इति नाममंत्रेण
षोडशोपचारैः संपूज्य प्रार्थयेत् ॥ ॐ ब्रह्मा मुरारिस्त्रिपुरांतकारी भानुः शशी भूमिसुतो बुधश्च ॥ गुरुश्च शुक्रः
शनिराहुकेतवः सर्वे ग्रहाः शांतिकरा भवंतु ॥ इति नवग्रहपूजनम् ॥ ॥ अथ रक्षाविधानम् ॥ तत्रादौ
वामहस्ते श्वेतसर्षपाक्षतान्गृहीत्वा वक्ष्यमाणमंत्रैः पूर्वादिदिग्रक्षां कुर्यात्तत्र मंत्राः ॥ ॐ गणाधिपं नमस्कृत्य

नमस्कृत्य पितामहम् ॥ विष्णुं रुद्रं श्रियं देवीं वंदे भक्त्या सरस्वतीम् ॥ १ ॥ स्थानाधिपं नमस्कृत्य दिननाथं निशाकरम् ॥ धरणीगर्भसंभूतं शशिपुत्रं बृहस्पतिम् ॥ २ ॥ दैत्याचार्यं नमस्कृत्य सूर्यपुत्रं महाग्रहम् ॥ राहुं केतुं नमस्कृत्य यज्ञारंभे विशेषतः ॥ ३ ॥ शक्राद्या देवताः सर्वा मुनींश्च कथयाम्यहम् ॥ गर्गं मुनिं नमस्कृत्य नारदं मुनिसत्तमम् ॥ ४ ॥ वसिष्ठं मुनिशार्दूलं विश्वामित्रं तथैव च ॥ व्यासं मुनिं नमस्कृत्य सर्वशास्त्रविशारदम् ॥ ५ ॥ विद्याधिका ये मुनय आचार्याश्च तपोधनाः ॥ तान्सर्वान्प्रणमाम्येव यज्ञरक्षाकरान्सदा ॥ ६ ॥ पूर्वे रक्षतु गोविंद आग्नेय्यां गरुडध्वजः ॥ याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋते ॥ ७ ॥ वारुण्यां केशवो



रक्षेद्वायव्यां मधुसूदनः ॥ उत्तरे श्रीधरो रक्षेदीशाने तु गदाधरः ॥ ८ ॥ ऊर्ध्वं गोवर्द्धनो रक्षेदधस्ताच्च त्रिविक्रमः ॥ एवं दश दिशो रक्षेद्वासुदेवो जनार्दनः ॥ ९ ॥ शंखो रक्षेच्च यज्ञाग्रे पृष्ठे खड्गस्तथैव च ॥ वामपार्श्वे गदा रक्षेद्दक्षिणे तु सुदर्शनः ॥ १० ॥ ब्रह्माणं माधवो रक्षेदाचार्यं पातु माधवः ॥ उपदेष्टा तु यो विप्रस्तं रुद्रोऽवतु सर्वदा ॥ ११ ॥ यजमानं सपत्नीकं कमलाक्षश्च रक्षतु ॥ रक्षाहीनं तु यत्स्थानं तत्सर्वं रक्षतां हरिः ॥ १२ ॥

यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा ॥ स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ १३ ॥ अपक्रा
मंतु भूतानि पिशाचाः सर्वतो दिशम् ॥ सर्वेषामविरोधेन शुभकर्म समारभे ॥ १४ ॥ इति रक्षाविधानम् ॥ ( अत्र
समाचाराद्ब्राह्मणानां हस्तेषु रक्षाबंधनम् ) तत्र मंत्रः ॥ ॐ व्रतेन॑ दीक्षामा॑प्नोति दीक्षया॑प्नोति दक्षि॑णाम् ॥ दक्षि॑
णा श्रद्धामा॑प्नोति श्रद्धया॑सत्यमा॑प्यते ॥ १ ॥ ततस्तिलकं कुर्यात् ॥ ॐ युंजंति॑ ब्रध्नम॑रुषं चर॑न्तं परि॑तस्थुषः॑ ॥
रोच॑न्ते रोचना दिवि । युंजंत्य॑स्य काम्या हरी विप॑क्षसारथे॑ शोणा॑ धृष्णू नृवाह॑सा ॥ १ ॥ ततो यजमानवर
योरपि रक्षाबंधनं कर्तव्यम् ॥ तत्र मंत्रः ॥ ॐ यदाब॑ध्नं दाक्षायुणा हिर॑ण्यꣳ शतानी॑काय सुमनुस्यमा॑नाः ॥
तन्म॒ऽआब॑ध्नामि शतशा॑रदायायु॑ष्माञ्जरद॑ष्टिर्य॑थास॑म् ॥ १ ॥ ॐ त्वं ष्वं॑विष्ठदाशुषो नॄः॑ पाहि शृणुधी गिरः॑ ॥
रक्षा॑ तोकमुतत्मना॑ ॥ २ ॥ येन राजा बलिर्बद्धो दानवेंद्रो महाबलः ॥ तेन त्वामनुबध्नामि रक्षे मा चल
मा चल ॥ ३ ॥ ततः कुंकुमेन तिलकं कुर्यात् ॥ ॐ स्वुस्ति नुऽइन्द्रो॑ वृद्धश्र॑वाः स्वुस्ति नः॑ पूषा
विश्ववे॑दाः ॥ स्वुस्तिनुस्तार्क्ष्यो॑ऽ अरि॑ष्टनेमिः स्वुस्ति नो बृहुस्पति॑र्दधातु ॥ ४ ॥ इति संस्कारप्रकाशे समाचा

 राद्गणपतिपूजनादिरक्षाविधानान्तकर्म्मप्रयोगः समाप्तः ॥ ॥ अथ विवाहविधानम् ॥ तत्र तावत्कन्यापिता
 अर्हणवेलायां मण्डपे प्रत्यङ्मुख उपविश्य वरायोपवेशनार्थं शुद्धमासनं दत्त्वा तत्र प्राङ्मुखं वरमूर्ध्वजानुं
तिष्ठंतं संबोध्य । ॐ साधु भवानास्ताम् । अर्चयिष्यामो भवंतम् । इति ब्रूयात् ॥ ॐ अर्चय इति वरेणोक्ते
दाता विष्टरमादाय ॐ विष्टरो विष्टरो विष्टर इत्यन्येनोक्ते ॐ विष्टरः प्रतिगृह्यतामिति दाता वदेत् ॥ ॐ विष्टरं
प्रतिगृह्णामीत्यभिधाय वरो विष्टरं गृहीत्वा । ॐ वर्ष्मोस्मीत्याथर्वण ऋषिर्विष्टरो देवता अनुष्टुप्छंदः । उपवे-
शने विनियोगः ॥ ॐ वर्ष्मोस्मि समानानामुद्यतामिव सूर्य्यः ॥ इमन्तमभितिष्ठामि यो मा कश्चाभिदासति ॥
 इत्यनेन विष्टरमुदगग्रमासने निधाय उपविशति ॥ ततः पाद्यपात्रमादाय ॥ ॐ पाद्यं पाद्यं पाद्यमित्यन्येनोक्ते ।
ॐ पाद्यं प्रतिगृह्यतामिति दाता वदेत् ॥ ॐ पाद्यं प्रतिगृह्णामीत्याभिधाय यजमानांजलितोऽजलिना पाद्यमादाय
वरः । ॐ विराजो दोहोसीति मंत्रस्य प्रजापतिर्ऋषिरापो देवता यजुश्छंदः पादप्रक्षालने जलग्रहणे विनि
योगः ॥ ॐ विराजो दोहोसि विराजो दोहमशीय मयि पाद्यायै विराजो दोहः ॥ १ ॥ इति मंत्रेण ब्राह्मणो

दक्षिणं पादं प्रक्षाल्य तथैव वामं प्रक्षालयति ॥ [ क्षत्रियादयस्त्वन्ये सव्यं प्रक्षाल्य अनेनैव विधिना दक्षिणं प्रक्षालयंति ] ततः पूर्ववद्विष्टरं गृहीत्वा । ॐ विष्टरो विष्टरो विष्टर इत्यन्येनोक्ते । ॐ विष्टरः प्रतिगृह्यतामिति दाता वदेत् ॥ ॐ विष्टरं प्रतिगृह्णामीत्यभिधायवरो विष्टरं गृहीत्वा । ॐ वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः ॥ इमं तमभितिष्ठामि यो मा कश्चाभिदासति ॥ १ ॥ इत्यनेन पादयोरधस्तान्निदधाति ॥ ततो दूर्वाक्षतफलपुष्पचन्दनयुतार्घपात्रंगृहीत्वा । ॐ अर्घोऽर्घोऽर्घ इत्यन्येनोक्ते । ॐ अर्घः प्रतिगृह्यतामिति दाता वदेत् ॥ ॐ अर्घं प्रतिगृह्णामीत्यभिधाय । ॐ आपः स्थ इति मन्त्रस्य सिन्धुद्वीप ऋषिरनुष्टुप् छन्दः, आपो देवता अर्घं धारणे विनियोगः ॥ ॐ आपः स्थ युष्माभिः सर्वान्कामानवाप्नुवानीति मंत्रेण वरो यजमानहस्तादर्घं गृहीत्वा शिरसाभिवंद्य । समुद्रं व इति मन्त्रस्याथर्वण ऋषिर्बृहती छन्दो वरुणो देवता अर्घजलप्रवाहे विनियोगः। ॐ समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत । अरिष्टास्माकं वीरा मापरासेचि मत्पयः ॥ १ ॥ इत्यर्घपात्रस्थजलमैशान्यां त्यजन्पठेत् ॥ तत आचमनीयमादाय । ॐ आचमनीयमाचमनी

सं०प्र० यमाचमनीयम् । इत्यन्येनोक्ते । ॐ आचमनीयं प्रतिगृह्यतामिति दाता वदेत् ॥ ॐआचमनीयं
९१ प्रतिगृह्णामीत्यभिधाय वरो यजमानहस्तादाचमनीयं गृहीत्वा । आमागन्निति परमेष्ठी ऋषिर्बृहतीछन्द
आपो देवता आचमने विनियोगः ॥ ॐ आमागन्यशसा सꣳसृज वर्च्चसा तम्माकुरु प्रियं प्रजानामधि
पतिं पशूनामरिष्टिं तनूनाम् ॥ १ ॥ इति मन्त्रेण सकृदाचम्य स्मार्त्ताचमनं कुर्यात् ॥ ततो यजमानः कांस्य
पात्रस्थदधिमधुघृतानि कांस्यपात्रपिहितान्यादाय ॐ मधुपर्को मधुपर्को मधुपर्क इत्यन्येनोक्ते । ॐ मधुपर्कः
प्रतिगृह्यतामिति दाता वदेत् ॥ ॐ मधुपर्कं प्रतिगृह्णामि इति वरो वदेत् ॥ ततः मित्रस्येति प्रजापतिर्ऋषिः
कां० ४ पंक्तिश्छंदो मित्रो देवता मधुपर्कदर्शने विनियोगः ॥ ॐ मित्रस्य त्वा चक्षुषा प्रतीक्षे १ इति यजमानकर
स्थमेवोद्घाटितं मधुपर्कं निरीक्ष्य । देवस्यत्वेति ब्रह्मा ऋषिर्गायत्रा छन्दः सविता देवता मधुपर्कग्रहणे विनि
योगः ॥ ॐ देवस्यं त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यांम्पूष्णो हस्ताभ्यां प्रतिगृह्णामि ॥ १ ॥ इत्यंजलिना वरो
मधुपर्कं गृहीत्वा वामहस्ते कृत्वा नमः श्यावेति प्रजापतिर्ऋषिर्गायत्री छन्दः सविता देवता मधुपर्कालोडने

विनियोगः । ॐ नमः श्यावास्यायान्नशने यत्तऽआविद्धं तत्ते निष्कृन्तामीति मंत्रेणानामिकया त्रिः प्रदक्षिणमालोड्य अनामिकांगुष्ठाभ्यां भूमौ किंचिन्निक्षिप्य पुनस्तथैव द्विवारमालोड्य प्रत्येकं क्षिपेत् ॥ ततः । यन्मधुन इति कौत्स ऋषिर्मधुपर्को देवता जगती छंदो मधुपर्कप्राशने विनियोगः ॥ ॐ यन्मधुनो मधव्यं परमँरूपमन्नाद्यम् । तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानीत्यनेनानामिकांगुष्ठाभ्यां वारत्रयं मधुपर्कं प्राशयेत् ॥ प्रतिप्राशने चैतन्मंत्रपाठः ॥ ततो मधुपर्कशेषमसंचरदेशे धारयेत् ॥ तत आचम्य प्राणान्संस्पृशति ॥ ॐ वाङ्‌ म आस्येऽस्तु ॥ इति कराग्रेण मुखं स्पृशेत् ॥ ॐ नसोर्मे प्राणोऽस्तु ॥ इति तर्जन्यंगुष्ठाभ्यां दक्षिणवामनासारंध्रद्वयम् ॥ ॐ अक्ष्णोर्मे चक्षुरस्तु ॥ इति अनामिकांगुष्ठाभ्यां दक्षिणोत्तरचक्षुर्द्वयं युगपत् ॥ ॐ कर्णयोः श्रोत्रमस्तु ॥ इति मध्यमाङ्गुष्ठाभ्यां दक्षिणोत्तरौ कर्णौ स्पृशेत ॥ ॐ बाह्वोर्मे बलमस्तु । इति कराग्रेण दक्षिणोत्तरौ बाहू ॥ ॐ ऊर्वोर्मे ओजोस्तु ॥ इति युगपदूरू ॥ ॐ अरिष्टानि मेंऽगानि तनूस्तन्वा मे सह सन्तु ॥ इति शिरःप्रभृतिपादांतानि सर्वांगानि उभाभ्यां

हस्ताभ्यां स्पृशेत् ॥ तत आचमनम् ॥ ततः। ॐ गौर्गौर्गौरित्यन्येनोक्ते। यजमानेन च गौर्गौर्गौरितिप्र

त्युक्ते। वरः ॐ माता रुद्राणां दुहिता वसूनाᳬस्वसादित्यानाममृतस्य नाभिः ॥ प्र नु वोचं चिकितुषे जना
य मा गामनागामदितिं वधिष्ठ ॥ मम चामुष्य च पाप्मा हतः ॥ ॐ उत्सृजत तृणान्यत्तु इत्युच्चैर्ब्रूयात् ॥ गो
दानं च कुर्यात् ॥ इति मधुपर्कपूजाप्रयोगः ॥ अथाग्निस्थापनम् ॥ वेदिकां तुषकेशशर्करादिरहितां हस्तमात्रप
रमितां चतुरस्रां प्राक्प्लवां कुशैः परिसमुह्य तान्कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेन प्राग
ग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्य । उल्लेखनक्रमेणानामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्युक्ष्य तत्र

तूष्णीं कांस्यपात्रस्थं द्वितीयकांस्यपात्रेण पिहितं वह्निमाग्निकोणादानीय किंचित्क्रव्यादांशं नैर्ऋत्यां दिशि
त्यक्त्वा वेदिमध्ये स्थापयेत् ॥ तद्रक्षार्थं किंचिन्नियुज्य कौतुकागाराद्वरः अन्यो वा कन्यामानीय मंडपे
वरस्य दक्षिणभागेउपवेशयेत् ॥ इत्यग्निस्थापनम् ॥ ततः कन्यापिता वराय वस्त्रचतुष्टयं प्रयच्छति ॥ वरस्तेषु

१ कारिका–कन्यावस्त्रपरीधाने तथैव चोत्तरीयके। तथा समीक्षकाले तु पितुर्निष्क्रमणे गृहात् ॥ अश्मनो रोहणे चैव हस्तग्राहे तथैव च ॥ तथा सप्तपदे चैव वधूमूर्ध्न्यभिषेचने ॥ हृदयालंभने चैव तथैव अभिमंत्रणे ॥ दृढपुरुषे क्रमेणैव एतान्मंत्रान् वरः पठेत् ॥

मध्ये ॥ जरां गच्छेति मंत्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छंदस्तंतवो देवता वस्त्रपरिधाने विनियोगः । ॐ जरां गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपावा ॥ शतं च जीव शरदः सुवर्च्चा रयिश्च पुत्राननुसंव्ययस्वा युष्मतीदं परिधत्स्व वासः ॥ १ ॥ इति मंत्रेणैकं परिधानवस्त्रं परिधापयति ॥ ततो द्वितीयम् । याऽअकृन्तन्न इति मंत्रस्य प्रजापतिर्ऋषिर्जगती छंदो विधात्र्यो देवता वस्त्रपरिधाने विनियोगः ॥ ॐ याऽअकृन्तन्नवयं या अतन्वत याश्च देवीस्तन्तूनभितोऽततंथ ॥ तास्त्वा देवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वासः ॥ २ ॥ इति मंत्रेणोत्तरीयं परिधापयेत् ॥ ततः स्वयं च ॥ परिधास्यै इति मंत्रस्याथर्वण ऋषिस्त्रिष्टुप्छन्दस्तंतवो देवता वासःपरिधापने विनियोगः । ॐ परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि । शतं च जीवामि शरदः सुवर्चा रायस्पोषमभिसंव्यायिष्ये ॥ ३ ॥ इति मंत्रं पठित्वा । अधोवस्त्रं वरः परिधत्ते ॥ ततः । यशसेति मंत्रस्य प्रजापतिर्ऋषिर्जगती छंदो विधात्र्यो देवता वासःपरिधापने विनियोगः ॥ ॐ यशसा मा द्यावापृथिवी यशसेंद्रा बृहस्पती ॥ यशो भगश्च माविदद्यशो मा प्रतिपद्यताम् ॥ ४ ॥ इति पठित्वोत्तरीयं परिधत्ते ॥ ततो वरस्य कन्या

सं० प्र० याश्च द्विराचमनम् । ततः कन्यापिता परस्परं समंजेथामिति संप्रेष्य कन्यावरौ समंजयति ॥ समंजंत्विति
९३ मंत्रस्याथर्वण ऋषिरनुष्टुप्छंदो विश्वेदेवा देवता मैत्रीकरणे विनियोगः ॥ ॐ समं जन्तु विश्वे देवाः समापो हृदयानि नौ ॥ सम्मातरिश्वा संधाता समु देष्ट्रीं दधातु नौ ॥ १ ॥ इति वरः पठेत् ॥ ततः कन्याप्रदकर्तृकं कन्यावरयोर्ग्रंथिबंधनम् [ कंकणबंधनं हस्तलेपनम् ] ॥ अथ कन्यादानम् ॥ दाता स्वदक्षिणस्थपत्न्या सह वरदक्षिणपार्श्वभागे शुभासने उदङ्मुख उपविश्य आचम्य प्राणानायम्य स्वदक्षिणहस्ते दूर्वाक्षतफलपुष्प चंदनजलान्यादाय जामातृदक्षिणकरोपरि कन्यादक्षिणकरं निधाय । ॐ दाताहं वरुणो राजा द्रव्यमादि
कां० ४ त्यदैवतम् ॥ वरोऽसौ विष्णुरूपेण प्रतिगृह्णात्वयं विधिः ॥१॥ इति पठेत् । ततः ॐ विष्णुर्विष्णुर्विष्णुः ॥ ॐ तत्स द्य श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्त्तमानस्य ब्रह्मणो द्वितीयपरार्द्धे तदादौ श्रीश्वेतवाराहकल्पे सप्तमे वैवस्वतमन्वंतरे अष्टाविंशतितमे कलियुगे तत्प्रथमचरणे जंबूद्वीपे भरतखण्डे तत्रापि परमपवित्रे भारते

१ बृहत्पाराशरः—"कन्यादानसमारंभे दाता शंखे समाददेत् । दूर्वाक्षतफलं पुष्पं चंदनं जलमेव च ।" इति ।

वर्षे आर्यावर्त्तांतर्गतब्रह्मावर्त्तैकदेशे श्रीगंगायमुनयोरमुकदिग्भागे नर्मदायाउत्तरे देशे श्रीबुद्धावतारे अमुकसं
ख्यापरिमिते विक्रमाब्दे अमुकनामसंवत्सरे अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुक
तिथौ अमुकवासरे अमुकनक्षत्रे अमुकराशिस्थे सूर्ये अमुकराशिस्थे चंद्रे अमुकराशिस्थे देवगुरौ एवं
ग्रहगुणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोऽमुकशर्मा अस्याः कन्यायाः अनेन वरेण धर्मप्रजया
उभयोर्वंशयोर्वंशवृद्ध्यर्थं तथा च मम समस्तपितॄणां निरतिशयसानंदब्रह्मलोकावाप्त्यादिकन्यादान
कल्पोक्तफलावाप्तये अनेन वरेण अस्यां कन्यायामुत्पादयिष्यमाणसंतत्या दशपूर्वान्दश परानात्मानं
च एकविंशतिपुरुषानुद्धर्तुं श्रीलक्ष्मीनारायणप्रीतये ब्राह्मविवाहविधिना कन्यादानमहंकरिष्ये ॥ इति
संकल्प्य कन्यां संप्रगृह्य ॐ कन्यां कनकसंपन्नां कनकाभरणैर्युताम् । दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजि
गीषया ॥ १ ॥ विश्वंभरा सर्वभूतसाक्षिण्यः सर्वदेवताः ॥ इमां कन्यां प्रदास्यामि पितॄणां तारणाय च ॥ २ ॥

---

१ सूतसंहितायाम्–"अश्वमेधः क्रतुर्यथा सर्वयज्ञेषु चोत्तमः । एवं सर्वेषु दानेषु कन्यादानं प्रशस्यते ॥" इति ।

सं०प्र० इति मंत्रौ पठित्वा वरहस्ते सुप्रोक्षितादिकरणम् ॥ ॐ शिवा आपः संतु इति जलम् । संतु शिवाऽ आपः इति प्रति
 वचनम् ॥ ॐ सौमनस्यमस्तु इति पुष्पम् । अस्तु सौमनस्यम् । ॐ अक्षतं चारिष्टं चास्तु इत्यक्षताः । अस्त्वक्षत
मरिष्टं च ॥ ॐ गंधाः पांतु ॥ इति गंधम् । ॐ सुमंगल्यं चास्तु इति प्रतिवचनम् । ॐ अक्षताः पांतु आयु
ष्यमस्तु ॥ ॐ पुष्पाणि पांतु सौश्रियमस्तु ॥ यत्पापं रोगमशुभमकल्याणं तद्दूरे प्रतिहतमस्तु ॥ इति
पुण्याहवाचनं कृत्वा पुनर्देशकालौ संकीर्त्य मम समस्तपितॄणां निरतिशयसानंदब्रह्मलोकावाप्त्यादिकन्या
दानकल्पोक्तफलावाप्तये अनेन वरेणास्यां कन्यायामुत्पादयिष्यमाणसंतत्या दश पूर्वान्दश परानात्मानं
कां० ४ च एकविंशतिपुरुषानुद्धर्तुं श्रीलक्ष्मीनारायणप्रीतये अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्राय
अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पौत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पुत्राय अमुकगो
त्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रीम् अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पौत्रीम् अमुकगोत्रस्यामुक

१ ऋष्यश्रृंगः—"अद्येत्यादि यथाकालज्ञानं कृत्वा तु दैशिकम् । सप्तम्यंतं तु षष्ठ्यंतं गोत्रं प्रवरमेव च ॥ वेदादिकं समुच्चार्य प्रपितामहपूर्वकम् । संज्ञाविधानं चार्थस्य चतुर्थ्यंतं वरं तथा । द्वितीयांतंतु कन्याया नाम संकीर्तयेद्बुधः ॥"

प्रवरस्यामुकशर्मणः पुत्रीम् [ इत्यनेन क्रमेण त्रिरावर्त्य पठनीयम् ] अमुकगोत्राय अमुकप्रवराय अमुकशर्मणे वराय श्रीधररूपिणे कन्यार्थिने अमुकगोत्राममुकप्रवराममुकनाम्नीमिमां कन्यां श्रीरूपिणीं वरार्थिनीं यथाशक्त्यलंकृतां सोपस्करां प्रजापतिदैवत्यां पुराणोक्तशतगुणीकृतज्योतिष्टोमातिरात्रफलप्राप्तिकामः प्रजोत्पादनार्थं भार्यात्वेन तुभ्यमहं संप्रददे ॥ इति पठित्वा सदूर्वायवजलं कन्याहस्तं च वरहस्ते दद्यात् ॥ ततो वरः ॐ स्वस्तीति प्रतिवचनं दत्त्वा ॐ द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्विति मंत्रेण तां प्रतिगृह्य ॐ कोऽदात्कस्मांऽदात्कामोऽदात्कामायादात् ॥ कामो दाता कामः प्रतिग्रहीता कामैतत्ते ॥१॥ इति कामस्तुतिं पठेत् ॥ ततो दाता । गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम् । गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥ १ ॥ कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वयोः ॥ कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥२॥ मम श्रेष्ठकुले जाता पालिता वत्सराष्टकम् ॥ तुभ्यं विप्र मया दत्ता पुत्रपौत्रप्रवर्धिनी॥३॥इति संप्रार्थ्य । कन्यादानप्रतिष्ठासिद्ध्यर्थम् ॐ अद्य कृतैतत्कन्यादानकर्मणः सांगतासिद्ध्यर्थमिदं सुवर्णांगुलीयकमग्निदैवतं वा दास्यमानां धेनुं वा तन्मू

ल्यद्रव्यममुकगोत्रायामुकशर्मणे वराय दक्षिणात्वेन तुभ्यमहं संप्रददे ॥ इति दक्षिणां दद्यात् ॥ ॐ स्वस्तीति वरो ब्रूयात् ॥ ततो दाता धर्मार्थकामसंसक्तैर्यो नरैः साध्यते परः ॥ धर्मस्त्वयानया सार्धमाचर्तव्यः स वै चिरम् ॥ १ ॥ धर्मे चार्थे च कामे च त्वयेयमतिचारतः ॥ न त्याज्याऽऽज्याहुतिरिव भूतौ संसारभूतिदा ॥ २ ॥ कोऽपि वै यस्त्वया धर्मश्चरितव्यः सोऽनया सह ॥ त्वयेयं नातिचर्तव्या धर्मे चार्थे च कामके ॥ ३ ॥ [ वरः ] अहं नातिचरामीह यदुक्तं भवता ततः ॥ धर्मार्थकामकैः कार्यैर्देहच्छायेव सर्वदा ॥ १ ॥ नातिचरामीति वरो वदेत् ॥ इति पठित्वा दाता यौतकत्वेन जलपात्रभोजनभाजनानि महिष्यश्वगजदासीदासशय्याभूवाहनालंकारादि यथाविभवं संकल्प्य दद्यात् ॥ इति कन्यादानम् ॥ ततो वरः । ॐ यदैषि मनसा दूरंदिशोनु पवमानो वा हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोत्वमुकि ॥ १ ॥ इत्यनेन मंत्रेण प्रतिग्रहस्थानाद्वधूं गृहीत्वा निष्क्रम्याग्निसमीपमागच्छेत् ॥ ततो वेदिदक्षिणस्यां दिशि वारिपूर्णकलशमूर्ध्वं तिष्ठतो मौनिनो दृढपुरुषस्य स्कंधे अभिषेकपर्यंतं धारयेत् ॥ ततो वधूपित्रा परस्परं समीक्षेथामिति प्रेषितो वरः समीक्षमाणां समीक्षमाणः ॥ अघो

रचक्षुरित्यादिचतुर्णां प्रजापतिर्ऋषिर्द्वितीयस्यानुष्टुप् शेषाणां त्रिष्टुप् छंदः कुमारीसमीक्षणे विनियोगः । ॐ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः वीरसूर्देवकामा स्योना शन्नो भव द्विपदे शं चतुष्पदे॥१॥ सोमः प्रथमो विविदे गंधर्वो विविदऽउत्तरः ॥ तृतीयोऽअग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः॥२॥ सोमो ददद्गन्धर्वाय गन्धर्वो ददददग्नये ॥ रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ ३ ॥ सा नः पूषा शिवतमा मेरय सा नऽऊरूऽउशती विहर॥यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्ट्यै॥४॥इति वरपठितमंत्रांते परस्परं निरीक्षणम् ॥ ततोऽग्निं प्रदक्षिणीकृत्य पश्चादग्नेर्वधूं दक्षिणतः कृत्वा तामुपवेश्य स्वयमुपविश्य वरः पुष्पचंदनतांबूलवस्त्राण्यादाय देशकालौ स्मृत्वा अद्य कर्त्तव्यविवाहहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे । इति ब्रह्माणं वृणुयात् ॥ ॐ वृतोस्मीति प्रतिवचनम् ॥ यथा विहितं कर्म कुरु इति वरेणोक्ते । करवाणीति ब्राह्मणो वदेत् ॥ ततोऽग्नेर्दक्षिणतः शणवर्जं शुद्धमासनं दत्त्वा तदुपरि प्रागग्रान्कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानीय अत्र त्वं मे ब्रह्मा भव इत्यभिधाय कल्पि

सं०प्र० तासने उपवेशयेत् ॥ तदभावे कुशनिर्मितं वा स्थापयेत् ॥ तत आचार्यवरणम् ॥ देशकालौ स्मृत्वा अद्य कर्त
९६ व्यविवाहहोमकर्मणि आचार्यकर्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिराचार्य
त्वेन त्वामहं वृणे । इत्याचार्यं वृत्वा । ॐ वृतोस्मीतिप्रतिवचनानंतरं यथा यथाविहितं कर्म्म कुरु इति वदेत् ।
करवाणीति प्रतिवचनम् ॥ एवमेव ऋत्विजं वृणुयात् ॥ ततः प्रणीतापात्रं पुरतः कृत्वा वारिणापूर्य कुशैराच्छाद्य
ब्रह्मणो मखमवलोक्य अग्नेरुत्तरतः कुशोपरि निदध्यात् ॥ ततः परिस्तरणम् ॥ बर्हिषश्चतुर्थभागमादाय आग्ने
यादीशानांतम् । ब्रह्मणोग्निपर्यंतम् । नैर्ऋत्याद्वायव्यांतम् । अग्नितः प्रणीतापर्यन्तम् । ततोऽग्नेरुत्तरतः पश्चिमदिशि
कां० ४ पवित्रच्छेदनार्थं कुशत्रयं पवित्रकरणार्थमनंतगर्भकुशपत्रद्वयम् । प्रोक्षणीपात्रम् । आज्यस्थाली । संमार्जनार्थं
कुशत्रयम् । उपयमनार्थं वेणीरूपकुशत्रयम् । समिधस्तिस्रः यज्ञियाः । स्रुवः खादिरः । आज्यं गव्यम् ।
षट्पंचाशदुत्तरमुष्टिशतद्वयावच्छिन्नं तंडुलपूर्णपात्रम् । दक्षिणा ॥ एतानि पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि
क्रमेणासादनीयानि ॥ अथ तस्यामेव दिशि असाधारणवस्तून्युपकल्पनीयानि । तत्र शमीपत्रमिश्राः लाजाः ।

दृषदुपलम्। कुमारीभ्राता। शूर्प्पः। दृढपुरुषः। अन्यदपि तदुपयुक्तमालेपनादिद्रव्यम्। ततः पवित्रच्छेदन कुशैः पवित्रे छित्त्वा सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय अनामिकांगुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्पवनम्। ततः प्रोक्षणीपात्रस्य सव्यहस्ते करणम्। अनामिकांगुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुद्दिंगनम्। प्रणीतोदकेन प्रोक्षणीप्रोक्षणम्। प्रोक्षणीजलेन यथासादितवस्तुसेचनम्। अग्निप्रणीतयोर्मध्ये प्रोक्षणी पात्रनिधानम्। तत आज्यस्थाल्यामाज्यनिर्वापः। ततोऽधिश्रयणम्। ततो ज्वलत्तृणादिना प्रदक्षिणक्रमेण हविर्वेष्टयित्वा वह्नौ तत्प्रक्षेपः। ततः अधोमुखस्य स्रुवस्य प्रतपनम्। संमार्जनकुशानामग्रैरंतरतो मूलैर्बाह्यतः स्रुवं संमृज्य। प्रणीतोदकेन अभ्युक्ष्य पुनः प्रतप्य स्रुवं दक्षिणतो निदध्यात्॥ तत आज्यस्याग्नेरवतारणम्। आज्ये प्रोक्षणीवदुत्पवनम्। अवेक्ष्य सत्यपद्रव्ये निरसनम्। पुनः प्रोक्षण्युत्पवनम्। तत उपयमनकुशान्वामहस्ते कृत्वा उत्तिष्ठन्प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्तास्तिस्रः समिधः क्षिपेत्॥ तत उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निपर्युक्षणं कृत्वा। प्रणीतापात्रे पवित्रे निधाय पातितसजघनदक्षिण

सं० प्र० जानुः । कुशादिना ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहोति ॥ [ तत्राघारादारभ्य द्वादशाहुतिषु
१७ तत्तदाहुत्यनंतरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ] अथ होमः ॥ ॐ प्रजापतये स्वाहा । इदं प्रजा
पतये ॥ [ इति मनसा ] ॐ इंद्राय स्वाहा । इदमिन्द्राय ॥ ( इत्याघारौ ) ॐ अग्नये स्वाहा । इदमग्नये ॥
ॐ सोमाय स्वाहा । इदं सोमाय ॥ [ इत्याज्यभागौ ] ॐ भूः स्वाहा । इदमग्नये ॥ ॐ भुवः स्वाहा । इदं
वायवे ॥ ॐ स्वः स्वाहा । इदं सूर्य्याय ॥ [ एता महाव्याहृतयः ] ॐ त्वन्नोऽ अग्ने वरुणस्य विद्वान्देवस्य
हेडो अवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्स्वाहा । इदमग्नी
कां० ४ वरुणाभ्यां० ॥ ॐ स त्वन्नोऽअग्नेऽवमो भवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ ॥ अवयक्ष्व नो वरुणꣳ रराणो वीहि
मृडीकꣳ सुहवो नऽएधि स्वाहा । इदमग्नीवरुणाभ्यां० । ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्त्वमया
ऽअसि ॥ अयानो यज्ञं वहास्ययानो धेहि भेषजꣳ स्वाहा । इदमग्नये० । ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः
पाशा वितता महान्तः ॥ तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा । इदं वरुणाय

सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च ॥ ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यम श्रथाय ॥ अथावयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा । इदं वरुणाय० । [ एताः प्रायश्चित्त संज्ञकाः ] ततोऽन्वारब्धं विना ॥ अथ राष्ट्रभृद्धोमः ॥ ॐ ऋताषाडृतधामाग्निर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥ इदमृतासाहे ऋतधाम्ने अग्नये गंधर्वाय० ॥ १ ॥ ॐ ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोप्सरसो मुदो नाम ताभ्यः स्वाहा । इदमोषधीभ्योप्सरोभ्यो मुद्भ्यः ॥ २ ॥ ॐ सꣳहितो विश्वसामा सूर्यो गन्धर्वः स न इदम्ब्रह्म क्षत्रं पातु तस्मै स्वाहावाट् ॥ इदं सꣳहिताय विश्वसाम्ने सूर्याय गंधर्वाय ॥ ३ ॥ ॐ सꣳहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरसऽ आयुवो नाम ताभ्यः स्वाहा । इदं मरीचिभ्योऽप्सरोभ्य आयुभ्यः ॥ ४ ॥ ॐ सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः स न इदम्ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाट् ॥ इदं सुषुम्णाय सूर्यरश्मये चंद्रमसे गंधर्वाय० ॥ ५ ॥ ॐ सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ताभ्यः स्वाहा । इदं नक्षत्रेभ्योऽप्सरोभ्यो भेकुरिभ्यः० ॥ ६ ॥ ॐ इषिरो विश्वव्यं

सं०प्र० चा वातो गन्धर्वः स नऽइदं ब्रह्म क्षत्र पात तस्मै स्वाहा वाट् । इदमिषिराय विश्वव्यचसे वाताय गन्धर्वाय०
१८ ॥ ७ ॥ ॐ इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽप्सरसऽउर्ज्जोनाम ताभ्यः स्वाहा ॥ इदमद्भ्योऽप्सरोभ्यऽ
ऊर्ग्भ्यः० ॥ ८ ॥ ॐ भज्युः सुपर्णो यज्ञो गन्धर्वः स न इदम्ब्रह्मक्षत्रं पातु तस्मै स्वाहावाट् । इदं भुज्यवे सुप
र्णाय यज्ञाय गंधर्वाय० ॥ ९ ॥ ॐ भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्तावानाम
ताभ्यःस्वाहा ॥ इदं दक्षिणाभ्योऽप्सरोभ्यस्तावाभ्यः ॥ १० ॥ ॐ प्रजापतिर्विश्वकर्मा मनो गंधर्वः
स नं इदम्ब्रह्म क्षत्रं पातु तस्मै स्वाहावाट् ॥ इदं प्रजापतये विश्वकर्मणे मनसे गंधर्वाय० ॥ ११ ॥
कां० ४ ॐ प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्य ऋक्सामान्यप्सरसऽएष्टयो नाम ताभ्यः स्वाहा ॥ इदमृक्सामेभ्योऽ
प्सरोभ्यऽएष्टिभ्यः० ॥ १२ ॥ इति राष्ट्रभृद्धोमः ॥ अथ जयाहोमः ॥ ॐ चित्तं च स्वाहा । इदं चित्ताय० ॥ १ ॥
ॐ चित्तिश्च स्वाहा । इदं चित्त्यै० ॥ २ ॥ ॐ आकूतं च स्वाहा । इदमाकूताय० ॥ ३ ॥ ॐ आकूतिश्च
स्वाहा । इदमाकूत्यै० ॥ ४ ॥ ॐ विज्ञातं च स्वाहा । इदं विज्ञाताय० ॥ ५ ॥ ॐ विज्ञातिश्च स्वाहा । इदं विज्ञा

त्यै० ॥ ६ ॥ ॐ मनश्च स्वाहा । इदं मनसे० ॥ ७ ॥ ॐ शक्करीश्च स्वाहा । इदं शक्करीभ्यः ॥ ८ ॥ ॐ दर्शश्च स्वाहा । इदं दर्शाय० ॥ ९ ॥ ॐ पौर्णमासं च स्वाहा । इदं पौर्णमासाय० ॥ १० ॥ ॐ बृहच्च स्वाहा । इदं बृहते ॥ ११ ॥ ॐ रथंतरं च स्वाहा । इदं रथंतराय० ॥ १२ ॥ ॐ प्रजापतिर्जयानिंद्राय वृष्णे प्रायच्छदुग्रः पृतना जयेषु ॥ तस्मै विशः समनमंत सर्वाः स उग्रः सऽइहव्यो बभूव स्वाहा । इदं प्रजापतये जयानिंद्राय ॥ ॥ १३ ॥ इति जयाहोमः ॥ अथ अभ्यातानहोमः ॥ ॐ अग्निर्भूतानामधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याᳬं स्वाहा ॥ इदमग्नये भूतानामधिपतये० ॥ १ ॥ ॐ इन्द्रो ज्येष्ठानामधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याᳬं स्वाहा ॥ इदमिंद्राय ज्येष्ठानामधिपतये० ॥ २ ॥ ॐ यमः पृथिव्याऽअधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याᳬं स्वाहा ॥ इदं यमाय

१ कारिका—" रौद्री पैत्री तथा मृत्युर्यमाहुत्याकृते तथा । अंतर्धानं विना यस्तु अल्पायुर्दंपती भवेत् ॥ रौद्रींपैत्रीमृत्युयमाहुतीर्हुत्वा ह्यपः स्पृशेत् । अपां स्पर्शनकाले तु स्पृशेत्प्रणीतकं जलम् ॥ यमाय दक्षिणे त्याग ऐशान्यां रुद्रमेव च । दक्षिणाग्नेययोर्मध्ये पितृत्यागो विधीयते ॥ एतत्त्यागं स्वयं पात्रे अन्यं देयात्तु प्रोक्षणीम् । "

सं०प्र० पृथिव्या अधिपतये० ॥ ३ ॥ अत्र प्रणीतोदकस्पशः ॥ ॐ वायुरंतरिक्षस्याधिपतिः स मावत्वस्मि
११ न्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याꣳस्वाहा ॥ इदं वायवे अंतरिक्षस्या
धिपतये० ॥ ४ ॥ ॐ सूर्यो दिवोऽधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायाम
स्मिन्कर्मण्यस्यां देव हूत्याꣳस्वाहा ॥ इदं सूर्याय दिवोधिपतये० ॥ ५ ॥ ॐ चंद्रमा नक्षत्राणामधिपतिः
स मावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याꣳ स्वाहा ॥ इदं
चंद्रमसे नक्षत्राणामधिपतये० ॥६॥ ॐ बृहस्पतिर्ब्रह्मणोधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामा
कां० ४ शिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याꣳ स्वाहा ॥ इदं बृहस्पतये ब्रह्मणोऽधिपतये ॥ ७ ॥
ॐ मित्रः सत्यानामधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यां
देवहूत्याꣳ स्वाहा ॥ इदं मित्राय सत्यानामधिपतये० ॥ ८ ॥ ॐ वरुणोऽपामधिपतिः स माव
त्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याꣳस्वाहा ॥ इदं वरुणायापा

मधिपतये० ॥ ९ ॥ ॐ समुद्रः स्रोत्यानामाधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्याम्पुरो
धायामस्मिन्कर्मण्यस्यां देवहूत्यां स्वाहा ॥ इदं समुद्राय स्रोत्यानामधिपतये० ॥ १० ॥ ॐ अन्नं साम्राज्या
नामधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्म्मण्यस्यां देवहूत्यां
स्वाहा ॥ इदमन्नाय साम्राज्यानामधिपतये० ॥ ११ ॥ ॐ सोम ओषधीनामधिपतिः स मावत्वस्मिन्ब्रह्मण्य
स्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्यां स्वाहा ॥ इदं सवित्रे प्रसवानामधिपतये०
॥ १२ ॥ ॐ रुद्रः पशूनामधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्म
ण्यस्यां देवहूत्यां स्वाहा ॥ इदं रुद्राय पशूनामधिपतये० ॥ १३ ॥ अत्र प्रणीतोदकस्पर्शः ॥ ॐ त्वष्टा रूपा
णामधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्यां
स्वाहा ॥ इदं त्वष्टे रूपाणामधिपतये० ॥ १४ ॥ ॐ विष्णुः पर्वतानामधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽ
स्यामाशिष्यस्या पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्यां स्वाहा ॥ इदं विष्णवे पर्वतानामधिपतये० ॥ १५ ॥ ॐ म

सं०प्र० रुतोगणानामधिपतयस्ते मावंत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या
१०० ꣳस्वाहा ॥ इदं मरुद्भ्यो गणानामधिपतिभ्यः० ॥१६॥ ॐ पितरः पितामहाः परेवरे ततस्ततामहास्ते मावंत्वस्मि
न्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याꣳ स्वाहा ॥ इदं पितृभ्यः पिताम
हेभ्यः परेभ्योऽवरेभ्यस्ततेभ्यस्ततामहेभ्यः० ॥ १७ ॥ अत्र प्रणीतोदकस्पर्शः ॥ इत्यभ्यातानननामकम् ॥ ॐ
अग्निरैतु प्रथमो देवतानाꣳ सोस्यै प्रजां मुंचतु मृत्युपाशात् ॥ तदयठं० राजा वरुणोऽनुमन्यतां यथेयठं० स्त्री
पौत्रमघं न रोदात्स्वाहा ॥ इदमग्नये० ॥ १ ॥ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः ।
कां० ४ अशून्योपस्था जीवतामस्तु माता पौत्रमानंदमभिप्रबुध्यतामियठं स्वाहा ॥ इदमग्नये० ॥ २ ॥ ॐ स्वस्ति
नोऽअग्ने दिवा पृथिव्या विश्वानि धेह्ययथा यजत्र ॥ यदस्यां मयि दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि
चित्रठं स्वाहा ॥ इदमग्नये० ॥ ३ ॥ ॐ सुगंन्नु पंथां प्रदिशन्नऽएहि ज्योतिष्मद्धेह्यजरन्नऽ आयुः ॥ अपैतु मृत्यु
रमृतं म आगाद्वैवस्वतो नोऽअभयं कृणोतु स्वाहा ॥ इदं वैवस्वताय० ॥ ४ ॥ अत्र प्रणीतोदकस्पर्शः ॥ अथातः

पटम् ॥ तूष्णीम् ॥ ॐ परं मृत्योऽअनुपरें हि पंथीं यस्तेऽ अन्य इतरो देवयानात् ॥ चक्षुष्मते शृण्वते तें ब्रवीमि मा नंः प्रजाᳬंरीरिषो मोत वीरान्स्वाहा ॥ इदं मृत्यवे न ममेति अग्नौ त्यागः ॥ ५ ॥ अत्र प्रणी तोदकस्पर्शः ॥ अथ लाजाहोमः ॥ कुमार्याः भ्रांता पूर्वोपकल्पिताञ्छमीपत्रमिश्रांल्लाँजाञ्छूर्पे कृतान्स्वेनांज लिना गृहीत्वा वरांजलिपुटोपरि संलग्नकुमार्या अंजलावावपति ॥ ताँल्लाजान्प्राङ्मुखी तिष्ठन्ती कुमारी सव्यहस्तसहितेन दक्षिणहस्तेन अंजलिना अग्नौ जुहोति ॥ तत्र मंत्राः ॥ ॐ अर्य्यमणं देवं कन्या अग्निम यक्षत ॥ स नोऽअर्यमा देवः प्रेतो मञ्चतु मा पतेः स्वाहा ॥ इदमर्य्यम्णे न मम ॥ १ ॥ अनेन मंत्रेणांज लिस्थाँल्लाजांस्तृतीयांशं जुहोति ॥ ॐ इयन्नार्युपब्रूते लाजानावपंतिका ॥ आयुष्यमानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा ॥ इदमग्नये न मम ॥ २ ॥ इति मंत्रेणांजलिस्थाँल्लाजानर्द्धं जुहोति ॥ ॐ इमाँल्लाजानावपा

१ कारिकायाम्—"लाजाहोमत्रये मंत्रानश्मारोहणे तथा । भगाय चैकं मंत्रं च कन्या पठति पंचकम् ॥ ध्रुवदर्शनकाले च पञ्चैव उदाहृतः ॥ " इति ॥

२ "भृष्टव्रीहिभिर्भवेल्लाजा शमीदलविमिश्रिता । कन्या होमं प्रकुर्वीत भर्तुर्भ्रातुश्च संगमे ॥ "

सं० प्र० म्यग्नौ समृद्धिकरणं तव ॥ मम तुभ्यं च संवननं तदग्निरनुमन्यतामियꣳ स्वाहा ॥ इदमग्नये न मम ॥ ३ ॥
१०१ इत्यनेन मंत्रेणांजलिस्थान्सर्वांल्लाँजाञ्जुहोति ॥ [ मंत्रत्रयं कन्यैव पठति ] अथ कुमार्याः सांगुष्ठं दक्षिणं
हस्तं वरो गृह्णाति ॥ तत्र वरपठनीयो मंत्रः ॥ ॐ गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्य
थासः ॥ भगोऽ अर्यमा सविता पुरंधिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥ अमोऽहमस्मि सा त्वꣳ सा
त्वमस्यमोऽहम् ॥ सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वम् ॥ तावेहि विवहावहै सह रेतो दधावहै ॥
प्रजा प्रजनयावहै पुत्रान्विंद्यावहै बहून् ॥ ते संतु जरदष्टयः संप्रियौ रोचिष्णू सुमनस्यमानौ ॥ पश्येम
कां० ४ शरदः शतञ्जीवेम शरदः शतꣳ शृणुयाम शरदः शतम् ॥ अथ कुमार्याः दक्षिणं पादं वरः स्वदक्षिण
हस्तेन गृहीत्वाग्नेरुत्तरतः प्राङ्मुखीं पूर्वोपकल्पितदृषदुपलोपरि आरोहयति ॥ तत्र मंत्रः ॥ ॐ आरोहेमम
श्मानमश्मेव त्वꣳ स्थिरा भव ॥ अभितिष्ठ पृतन्यतोऽववाधस्व पृतनायतः ॥ १ ॥ अथ गाथां गायति वरः ॥
ॐ सरस्वति प्रेदमव सुभगे वाजिनीवती ॥ यात्त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः ॥ १ ॥ यस्यां

भूतर्ठ सम्भवद्यस्यां विश्वमिदं जगत् ॥ तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यशः ॥ १ ॥ इत्यंतं वरो गाथां गायति ॥ ततोऽग्रे वधूः पश्चाद्वरः प्रणीताब्रह्मसहितमग्निं प्रदक्षिणं कुरुतः ॥ तत्र वरपठनीयो मंत्रः ॥ ॐ तुभ्यमग्रे पर्यवहन्त्सूर्यां वहतुना सह ॥ पुनः पतिभ्यो जायां दाग्ने प्रजया सह ॥ १ ॥ ततः पश्चादग्नेः स्थित्वा लाजाहोमसांगुष्ठहस्तग्रहणाऽश्मारोहणगाथागानाऽग्निप्रदक्षिणानि पुनरपि तथैव द्विः कर्त्तव्यानि ( एतेन नव लाजाहुतयः सांगुष्ठहस्तग्रहणत्रयं गाथागानत्रयं प्रदक्षिणात्रयं संपद्यते ) ततस्तृतीयपरिक्रमणानंतरं कुमार्या भ्राता शूर्पकोणप्रदेशेन सर्वाल्लाँजान्कुमार्यंजलावावपति ॥ तांस्तिष्ठन्ती कुमारी जुहोति ॥ ॐ भगाय स्वाहा । इदं भगाय न मम ॥ ततः समाचारात् अग्रे वरः पश्चाद्वधूस्तूष्णमिव चतुर्थपरिक्रमणं कुरुतः ॥ ततः वरः । उपविश्य ब्रह्मणान्वारब्धः । आज्येन । ॐ प्रजापतये स्वाहा । इदं प्रजा

१ कारिकायाम्—"कामस्त्वघोषबाणैः स्वैः प्रहरेदतिदारुणैः । तस्मादग्रे भवेत्कन्या तस्य बाणस्य शांतये ॥ कन्यकाग्रे वरं कृत्वा ब्राह्मणो ज्ञानदुर्बलः । विधवा जायते नारी निषिद्धस्तत्र कारणात् ॥ अग्रे तु शुभदा पत्नी मांगल्ये सर्वकर्मणि । पदेपदेऽश्वमेधं च धनायुःपुत्रवर्धनम् ॥ लाजानाज्यं स्रुवं कंभं ब्रह्माणमृत्विजं गुरुम् । एतेषां बाह्यतः कृत्वा शेषाणां तु प्रदक्षिणा ॥ " इति ।

पतये न ममेति प्रोक्षण्यां त्यागः ॥ ततोऽग्नेरुत्तरत आलेपनेनोत्तरोत्तरकृतसप्तमंडलेषु एनां वधूं सप्तपदाक्रमणं
वरः कारयति वक्ष्यमाणमंत्रैः । तत्र प्रथमे । ॐ एकमिषे विष्णुस्त्वानयतु इत्येकं पदमुदग्ददाति ॥ १ ॥
द्वितीये । ॐ द्वे ऊर्ज्जे विष्णुस्त्वानयतु इति द्वितीयम् ॥ २ ॥ तृतीये । ॐ त्रीणि रायस्पोषाय विष्णुस्त्वानयतु
॥ ३ ॥ चतुर्थे ॥ ॐ चत्वारि मायोभवाय विष्णुस्त्वानयतु ॥ ४ ॥ पंचमे । ॐ पंच पशुभ्यो विष्णुस्त्वानयतु ॥
॥ ५ ॥ षष्ठे । ॐ षड्ऋतुभ्यो विष्णुस्त्वानयतु ॥ ६ ॥ सप्तमे । ॐ सखे सप्तपदा भव सा मामनुव्रता भव विष्णु
स्त्वानयतु ॥७॥ एवं वर एकैकं मंत्रं समुच्चार्योच्चार्य सप्तपदानि दापयत्युत्तरोत्तरं दक्षिणपादेन ॥ ततोऽग्नेः पश्चा
दुपविश्य पुरुषस्य स्कंधस्थितकुंभादाम्रपल्लवेन जलमानीय तेन वरो वधूं मूर्द्धन्यभिषिंचति ॥ ॐ आपः शिवाः
शिवतमाः शांताः शांततमास्तास्ते कृण्वंतु भेषजम् ॥ १ ॥ पुनस्तथैवानीतजलेनात्मानमभिषिंचति ॥ ॐ
आपो हिष्ठा मयोभुवस्ता न ऊर्ज्जे दधातन ॥ महेरणाय चक्षसे ॥ १ ॥ ॐ यो वः शिवतमो रसस्तस्य भाजय

१ "वध्वा दक्षिणपादानि सप्तानि प्रक्रमेत्तु सा । याम्यादुदग्दिक्संस्थाप्य प्रक्रमेदुत्तरोत्तरम् ॥ गण्येदक्षिणपदान्पदवामान्निरर्थकान् ॥"

तेह नः ॥ उशतीरिव मातरः ॥ २ ॥ ॐ तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च नः ॥ ३ ॥ इति तिसृभिः ॥ ततो दिवा विवाहे सूर्यमुदीक्षस्वेति वधूं संबोधयति वरः । सा च प्रेरिता सती सूर्यमुदीक्षते ॥ तत्र मंत्रः ॥ ॐ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ १ ॥ अस्तमिते च सूर्ये ध्रुवमुदीक्षस्वेति प्रैषानंतरं ध्रुवं पश्यति ॥ तत्र वरपठनीयो मंत्रः ॥ ॐ ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधि पोष्या मयि मह्यं त्वादाद्बृहस्पतिर्मया पत्या प्रजावती संजीव शरदः शतम् ॥ १ ॥ सा यदि न पश्यति तर्हि पश्यामीति ब्रूयात् ॥ अथ वरो वध्वा दक्षिणांसस्योपरि हस्तं नीत्वा तस्या हृदयमालभते ॥ तत्र मंत्रः ॥ ॐ मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तं तेऽस्तु ॥ मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम् ॥ १ ॥ अत्र शिष्टसमाचारात् वधूं वरस्य वामभागे उपवेशयन्ति ॥ अथ वरोऽनामिकाग्रं वधूशिरसि धृत्वा तामभिमंत्रयति ॥ ॐ सुमंगलीरियं वधूरिमाꣳ समेत पश्यत ॥ सौभाग्यमस्यै दत्त्वा याथास्तं विपरे

तन ॥ १ ॥ ततः समाचारात्तस्याः सीमंते वरः सिंदूरं ददाति ॥ अथ वधूं बलवान्कश्चिद्ब्राह्मणो वरो वा उत्थाप्य प्रागुदग्वाऽनुगुप्तागारे लोहितानडुहचर्मणि प्रतिलोमास्तीर्णकुशेषु वा उपवेशयेत् । ॐ इह गावो निषीदंत्विहाश्वाऽइह पूरुषाः ॥ इहो सहस्रदक्षिणो यज्ञ इह पूषा निषीदत्विति मंत्रेण ॥ ततो ब्रह्मणान्वारब्धः । ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम । इति स्विष्टकृद्धोमं कुर्यात् ॥ ततः संस्रवप्राशनम् । आचम्य [ पूर्णपात्रदानम् ] देशकालौ संकीर्त्य अद्य कृतैतद्विवाहहोमकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापति दैवतं सदक्षिणाकममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणात्वेन तुभ्यमहं संप्रददे । इति ब्रह्मणे दक्षिणां दद्यात् ॥ ॐ स्वस्तीति प्रतिवचनम् ॥ एवमेव आचार्याय होत्रे च दक्षिणां दद्यात् ॥ ब्राह्मणश्चेद्गां क्षत्रियश्चेद् ग्रामं वैश्यश्चेदश्वं स्वकीयायाचार्याय ददाति ॥ अन्यच्च सुवर्णादिद्रव्यं यथाश्रद्धं यथाशक्ति ब्राह्मणेभ्यो दातुं संकल्प्य दद्यात् ॥ ततो ब्रह्मग्रंथिविमोकः ॥ ॐ सुमित्रियानऽआपऽ ओषधयः संतु ॥ इति पवित्रं गृहीत्वा प्रणीताजलेन शिरः संमृज्य ॐ दुर्मित्रियास्तस्मै संतु योस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ इत्यैशान्यां प्रणीतां

न्युब्जी कुर्यात् ॥ ततस्त्र्यायुषकरणम् ॥ स्रुवेण भस्मानीय दक्षिणानामिकाग्रगृहीतभस्मना ॐ त्र्यायुषं जमदग्नेरिति ललाटे ॥ ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायाम् ॥ ॐ यद्देवेषु त्र्यायुषमिति दक्षिणांसे ॥ ॐ तन्नोऽस्तु त्र्यायुषमिति हृदि ॥ एवं वध्वा अपि कुर्यात्। तत्र तन्नो इति स्थाने तत्ते इति विशेषः। ततः शिष्टाचारप्राप्तं तिलककरणाक्षतचंदनमंत्रविप्राशीर्वचनप्रतिष्ठामंत्रपाठादिकं यथाकुलं यथादेशसमाचारं तत्र तत्र क्रियमाणमनुमन्येरन् । [ विवाहादिसंस्कारेषु पूर्णाहुतिं न दद्यात् । पारस्करसूत्रादावनुक्तत्वात् ॥ "विवाहादिक्रियायां च शालायां वास्तुपूजने ॥ नित्यहोमे वृषोत्सर्गे पूर्णाहुतिं न कारयेत् ॥" इति प्रयोगरत्नादौ निषिद्धत्वाच्च ] । ततो विवाहादारभ्य त्रिरात्रमक्षारालवणाशिनौ स्यातां जायापती ॥ अधः खट्वारहिते भूभागे आस्तृते शयीयातां त्रिरात्रमेव ॥ संवत्सरं समग्रं मैथुनं नोपेयातां द्वादशरात्रं वा षड्रात्रं त्रिरात्रं चेति। एते विकल्पा मैथुनकरणशक्त्यपेक्षया ज्ञातव्याः ॥ इति श्रीपण्डितगौडश्रीचतुर्थीलालविरचिते संस्कारप्रकाशे विवाहपद्धतिः समाप्ता ॥ अथ चतुर्थीकर्म ॥ विवाहाच्चतुर्थ्यामपररात्रे वरो वध्वा सह वधूपितृगृहे मंगलं स्नात्वा

शुभासने चोपविश्य आचम्य देशकालौ स्मृत्वा मम अस्या भार्यायाः सोमगंधर्वाग्न्युपभुक्तदोषपरिहारद्वारा श्रीप रमेश्वरप्रीत्यर्थं विवाहैकदेशत्वाच्चतुर्थीकर्माहं करिष्ये। इति संकल्प्य गणेशस्मरणं कुर्यात् ॥ ततो गृहाभ्यंतर तोग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तर उदपात्रं प्रतिष्ठाप्य । स्थालीपाकं श्रपयित्वा कुशकंडिकां विधाय ब्रह्मणान्वारब्धः। ॐ प्रजापतये स्वाहा इदं प्रजापतये ॥ १ ॥ ॐ इंद्राय स्वाहा इदमिंद्राय २ ( इत्या घारौ ) ॐ अग्नये स्वाहा इदमग्नये ॥ ३ ॥ ॐ सोमाय स्वाहा इदं सोमाय ४ ( इत्याज्यभागौ ) ततोऽनन्वा रब्धः। ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै पतिघ्नी तनूस्ता



मस्यै नाशय स्वाहा। इदमग्नये ॥ ॐ वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उप धावामि यास्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा। इदं वायवे ॥ ॐ सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चि त्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं सूर्याय ॥ ॐ चंद्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै गृहघ्नी तनूस्तामस्यै

नाशय स्वाहा । इदं चंद्राय ॥ ॐ गंधर्व प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधा वामि यास्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं गंधर्वाय ॥ ततोऽन्वारब्धेन स्थालीपाकेन जुहुयात् । ॐ प्रजापतये स्वाहा । इदं प्रजापतये ॥ तत आज्यस्थालीपाकाभ्याम् ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते ॥ तत आज्येन ॥ ॐ भूः स्वाहा । इदमग्नये ॥ ॐ भुवः स्वाहा । इदं वायवे ॥ ॐ स्वः स्वाहा । इदं सूर्याय ॥ ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडोऽ अवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांꣳसि प्रमुमुग्ध्यस्मत्स्वाहा । इदमग्नीवरुणाभ्याम् ॥ ॐ स त्वन्नोऽअग्नेवमो भवोती नेदिष्ठोऽअस्याऽ उषसो व्युष्टौ । अव यक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो नऽ एधि स्वाहा । इदमग्नीवरुणाभ्याम् ॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्वमित्त्वमयाऽअसि ॥ अया नो यज्ञं वहास्ययानो धेहि भेषजꣳ स्वाहा । इद मग्नये ॥ ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः ॥ ॐ उदुत्तमं वरुण पाश

मुस्मदवाधमं विमध्यमठं श्रथाय ॥ अथावयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा । इदं वरुणाय ॥
ॐ प्रजापतये स्वाहा । इदं प्रजापतये ॥ ततः संस्रवप्राशनं ब्रह्मणे पूर्णपात्रदानं ब्रह्मग्रंथिविमोकं च कृत्वा पवि
त्राभ्यां मार्जनादिप्रणीताविमोकांतं होमशेषं समाप्य ततः प्रणीतोत्तरस्थानादुदपात्रादुदकमाम्रपल्लवेनादाय
वधूमूर्धन्यभिषिंचाति वरः ॥ ॐ या ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निंदिता तनूर्जारघ्नीं ततः एनां
करोमि सा जीर्य त्वं मया सह अमुकदेवि ॥ १ ॥ इति मंत्रेण ॥ ततो वरः स्थालीपाकं वधूं प्राशयति ॥ ॐ
कां० ४ प्राणैस्ते प्राणान्संदधाम्यस्थिभिरस्थीनि माᳬसैस्ते माᳬसानि त्वचा त्वचम् ॥ इत्यनेन मंत्रेण वरपठितेन
मंत्रांतेऽन्नं प्राशयेत् ॥ ततो वधूहृदयं स्पृष्ट्वा वरः पठेत् ॥ ॐ यत्ते सुसीमे हृदयं दिवि चंद्रमसि श्रितम् ॥ वेदाहं
तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शतᳬ शृणुयाम शरदः शतमिति ॥ १ ॥ ततः कंकणमोक्षणा
दीनि आचारप्राप्तानि कार्याणि ॥ ततः आचार्याय होत्रे च दक्षिणां दत्त्वा ब्राह्मणेभ्यो भूयसीं च दत्त्वा तैरा

शिषो गृह्णीयात् ॥ ततो यथाशक्ति ब्राह्मणभोजनसंकल्पः ॥ ततः पर्वश्राद्धवर्जं प्रत्यृतुकालमभिगमनं कुर्यात्
यथाकामी वा भवेत् ॥ इति संस्कारप्रकाशे चतुर्थीकर्मप्रयोगः समाप्तः ॥ ॥ अथ विवाहकर्मणः सामग्री ॥
गंधाः । कुंकुमम् । अक्षताः । पुष्पाणि । धूपः । दीपः । नैवेद्यम् लड्डुकादि । पूगीफलानि । तांबूलानि । ऋतुफ
लम् । नालिकेरम् । सर्वौषधयः । पंचरत्नानि । सप्तमृत्तिकाः । वटाश्वत्थाम्रप्लक्षोदुंबरपल्लवाः । पुष्पाणि । दूर्वाः ।
श्वेतसर्षपाः । सुवर्णशकलानि । रक्तसूत्रम् । कौसुंभवस्त्रम् । दधि । मधु । घृतं गव्यम् । गोमयम् । यज्ञियसमिधः ।
कलशः१ ताम्रकलशः १ पूर्णपात्रम् १ आज्यस्थाली कांस्यमयी १ कांस्यकटोरिकाः ४ स्रुवः १प्रणीता १ प्रोक्षणी
१ आचार्यादिवरणसामग्री । लाजाः । शमीपत्राणि । शंखः १ शूर्पः १ दृषदुपलम् । आलेपनद्रव्यम् । कार्पासव
र्तिकाः । दर्भाः । सिंदूरम् । धेनुदानम् । वरवस्त्रद्वयम् २ कन्यावस्त्रे २ गुडम् । आचार्यदक्षिणा । होतृदक्षिणा ।
वरार्थं सुवर्णांगुलीयकम् । भूयसी । अन्यान्यपि देशकुलाचारविहितानि द्रव्याणि संपादनीयानि ॥ इति विवाहो

पकरणानि ॥ इति श्रीरत्नगढनिवासिना गौडवंशोद्भवश्रीरामकृष्णामरचंद्रयोः पौत्रेण श्रीकस्तूरीचंद्रात्मजेन श्रीचतुर्भुजदत्तसूनुना श्रीमहादेवभक्तेन नानानिबंधकर्त्रा पण्डितश्रीचतुर्थीलालशर्मणा विरचिते संस्कारप्रकाशे प्रयोगनिबंधे विवाहविधानकथनं नाम चतुर्थः काण्डः समाप्तः ॥ ४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥





अथ पुनरुपनयनविधानम् ॥ तत्र मनुः ॥ अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च ॥ पुनःसंस्कारमर्हंति त्रयो वर्णा द्विजातयः ॥ ( बौधायनः ) सिंधुसौवीरसौराष्ट्रांस्तथा प्रत्यंतवासिनः ॥ अंगवंगकलिंगांश्च गत्वा संस्कारमर्हति ॥ ( प्रयोगपारिजाते ) अङ्गवङ्गकलिंगेषु सौराष्ट्रमगधेषु च ॥ तीर्थयात्रां विना गत्वा पुनःसंस्कारमर्हति ॥ ( हेमाद्रौ पाद्मे ) प्रेतशय्याप्रतिग्राही पुनःसंस्कारमर्हति ॥ (शातातपः) लशुनं गृञ्जनं जग्ध्वा पलांडुं च तथा शुनम् ॥ उष्ट्रीमानुषकेभाश्वरासभीक्षीरभोजनात् ॥ उपायनं[1] पुनः कुर्य्यात्तप्तकृच्छ्रं चरेन्मुहुः ॥ ( त्रिस्थलीसेतौ ) कर्मनाशाजलस्पर्शात्करतोयाविलंघनात् ॥ गण्डकीबाहुतरणात्पुनःसंस्कारमर्हति ॥ ( वृद्धमनुः ) जीवन्यदि समागच्छेद्धृतकुंभे निमज्ज्य च । उद्धृत्य स्थापयित्वाऽस्य जातकर्मादि कारयेत् ॥ ( मिताक्षरायां पराशरः) यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः ॥ अनाशकनिवृत्तश्च गार्हस्थ्यं चेच्चिकीर्षति ॥ स चरेत्रीणि कृच्छ्राणि त्रीणि चांद्रायणानि च ॥ जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात् ॥ ( अत्रिस्मृतौ )

१ उपनयनमित्यर्थः ।

सं०प्र० मद्यसंस्पृष्टकुंभेषु यत्तोयं पिबति द्विजः ॥ कृच्छ्रपादेन शुद्ध्येत पुनःसंस्कारमर्हति ॥ ( बोधायनः ) अमत्या
१०७ सुरापाने कृच्छ्रार्द्धपादं चरित्वा पुनरुपनयनमिति । औषधांतरानाश्यव्याध्युपशमनार्थं पैष्टीपाने एतदिति ॥
( मदनरत्ने वसिष्ठः ) मत्या मद्यपाने त्वसुराया सुरायाश्चाज्ञाने कृच्छ्रातिकृच्छ्रौ घृतप्राशनं पुनःसंस्कार
श्चेति ॥ (स्मृत्यंतरे) रेतोमूत्रपुरीषाणां गौडीमाध्व्योश्च प्राशने ॥ क्रव्यादपशुविष्ठानां संस्काराच्छुद्धिरिष्यते ॥
(यमस्मृतौ) अज्ञानाद्वारुणीं पीत्वा प्राश्य मूत्रपुरीषयोः॥ पुनसंस्कारमर्हंति त्रयो वर्णा द्विजातयः॥ (विष्णुस्मृतौ)
मलानां मद्यानामन्यतमस्य प्राशने चांद्रायणं कुर्य्यात् ॥ लशुनपलांडुगृंजनतद्गंधिविड्वराहग्रामकुक्कुटनरगोमां
कां० ५ सभक्षणे च सर्वेष्वेतेषु द्विजातीनां प्रायश्चितांते पुनःसंस्कारं कुर्यादिति॥अत्र संस्कारशब्देन उपनयनमेवोच्यते ।
तस्य द्विजत्वसंपादनरूपातिशययोगेन बुद्ध्यारोहादिति संस्कारकौस्तुभे ॥ ( समयोद्योते ) विनर्तुना वसंतेन
कृष्णपक्षे गलग्रहे ॥ अपराह्णे चोपनीतः पुनःसंस्कारमर्हति ॥ (वसिष्ठः) पापांशकगते चंद्रे अरिनीचस्थितेपि च ॥
अनध्याये चोपनीतः पुनःसंस्कारमर्हति ॥ (समुद्रयात्रायां विशेषः)यदि कश्चिद्वाणिज्यार्थं राजाज्ञाप्रतिपालनार्थं

च रेलशकटीनौयानादियोगेन समुद्रयात्रां करोति। तथा तत्कालेऽसौ स्वधर्ममनुतिष्ठति।म्लेच्छयवनबौद्धादिवि धर्मिपतितादिभिः सह गुरुतरसंसर्गं नाचरति। तत्स्पृष्टमन्नं जलं च न सेवते । अहरहरुपासनीयं संध्यावंदना दिकं न परित्यजति।तदापि ब्राह्मणक्षत्रियवैश्यैः प्रायश्चित्तांते पुनरुपनयनं कार्यम् । तदा अव्यवहार्य्यता नास्ति पतिताऽभावत्वात् ॥ तथाच ( मनुरपि ) विहितस्यानुष्ठानान्निंदितस्य च सेवनात् । अनिग्रहाच्चेंद्रियाणां नरः पतनमृच्छति॥ इति ॥ उषित्वा यत्र कुत्रापि स्वधर्मप्रतिपालनम् ॥ षट्कर्माणि प्रकुर्वीरन्निति धर्मस्य निश्चयः॥ एवमेव अंगवंगकलिंगसिंधप्रत्यंतबौद्धम्लेच्छयवनचीनविधर्मिदेशेष्वपि ज्ञेयः ॥ यदि च धर्मार्थसमुद्रयात्रायां वा वाणिज्यनानाशिल्पकौशल्यम्लेच्छभाषादिविद्यार्थं राजाज्ञया वा राजकोपेन द्वीपांतरगमनं करोति तत्र महानौकायां गमनकाले म्लेच्छदेशवासे च म्लेच्छादिसंस्पृष्टजलान्नादिभक्षणं मद्यमांसवसास्नेहास्थिचूर्ण नीलीवस्त्रचर्मासनशय्यादिनानानिषिद्धतरगुरुसंसर्गं च करोति सेवते च। तदा कृतेपि प्रायश्चित्ते द्विजानां पाति त्यं अव्यवहार्यता च ज्ञेया ॥ तथा च ( हरिहरभाष्ये, हेमाद्रौ आदित्यपुराणे च ) द्विजस्याब्धौ तु नौ

सं० प्र० यातुः शोधितस्यापि संग्रहः ॥ देवरेण सुतोत्पत्तिर्वानप्रस्थाश्रमग्रहः ॥ दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य
१०८ च ॥ समुद्रयानं स्वीकारः कमंडलुविधारणम्॥ महाप्रस्थानगमनं गोपशुश्च सुराग्रहः॥ अग्निहोत्रहवन्याश्च लेहो
लीढापरिग्रहः ॥ असवर्णासु कन्यासु विवाहश्च द्विजातिषु ॥ वृतस्वाध्यायसापेक्षमघसंकोचनं तथा ॥ अस्थिसं
चयनादूर्ध्वमंगस्पर्शनमेव च॥प्रायश्चित्तविधानं च विप्राणां मरणांतिकम्॥ संसर्गदोषः पापेषु मधुपर्के पशोर्वधः॥
दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ॥ शामित्रं चैव विप्राणां सोमविक्रयणं तथा ॥ दीर्घकालं ब्रह्मचर्यं नरमेधाश्व
मेधकौ ॥ कलौ युगे त्विमान्धर्मान्वर्ज्यानाहुर्मनीषिणः ॥ इति ॥ इत्यादिविशेषवाक्यानि हेमाद्रिप्रभृतिमहानि
का० ५ बंधेषु ज्ञातव्यानि।अत्र विस्तरभयान्न लिख्यंते ॥ अथ पुनरुपनयनप्रकारः कौस्तुभे। (बौधायनः)अथोपनीतस्य
व्रतानि भवंति । नान्यस्योच्छिष्टं भुंजीताऽन्यत्र पितृज्येष्ठाभ्यां न स्त्रिया सहभुंजीत मधु मांसं श्राद्धसूतकान्ननि
र्दशाहं संधिनीक्षीरं छत्राकिनिर्यासौ विलापनं गणान्नगणिकान्नमित्येतेषु पुनः संस्कारः ॥ प्रतिषिद्धदेशगमनमि
त्येकेषामथाप्युदाहरंति ॥ सुराष्ट्रं सिंधुसौवीरमवंती दक्षिणापथम् ॥ एतानि ब्राह्मणो गत्वा पुनःसंस्कारमर्हति ॥

इत्यथ पुनःसंस्कारं व्याख्यास्यामोऽथ देवयजनोल्लेपनप्रभृत्याग्निमुखान् कृत्वा पालाशीं समिधमाज्येन वा भ्याधाय वाचयति । पुनस्त्वादित्या रुद्रा व० कामाः स्वाहेत्यथाव्रत्यप्रायश्चित्ते जुहोति । यन्म आत्मनोमिंदा भू० पुनरग्निश्चक्षुरदादिति द्वाभ्याम् । अथ पक्वा जुहोति । सप्त ते अग्ने० घृतेन स्वाहा । अथाज्याहुतीरुपजु होति । येन देवाः पवित्रेणेति तिसृभिरनुष्टुंदसं स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथोपरमापरिधा नान् कृत्वा पालाशीं समिधमाधायाथाव्रत्यप्रायश्चित्ते जुहोति । अथ व्याहृतीर्जुहोति । अथापरो ब्राह्मणवचना देव सावित्र्या शतकृत्वो घृतमभिमंत्र्य प्राश्य कृतप्रायश्चित्तो भवति । गुरोर्वाप्युच्छिष्टं भुंजीताप्युदाहरंति । वपनं दक्षिणादानं मेखलां दंडमजिनं भैक्ष्यचर्याव्रतानि चैतानि निवर्त्तंते पुनःसंस्कारकर्मणीत्येते पुनःसंस्कार। व्याख्याता इति बौधायनसूत्रोक्ता व्यवस्था । अत्र शक्ताशक्तभेदेन गुरुलघुकल्पव्यवस्था बोध्या । इति संस्कारकौस्तुभः ॥ ( पराशरस्मृतौ ) अजिनं मेखलादंडौ भैक्ष्यचर्याव्रतानि च ॥ निवर्तंते द्विजातीनां पुनः संस्कारकर्मणि ॥ इति ॥ वपनं मेखलेति मनुस्मृतौ पाठः ॥ अथ प्रायश्चित्तार्थे व्रतबंधे विशेषः ॥ तत्र निमि

सं० प्र० त्तानंतरमेव करणे उदगयनपुण्यनक्षत्राद्युक्तकालो नापेक्ष्यते। अन्यथा तु यथोक्तकालापेक्षा ॥ तत्र कर्ता पिता
१०९ तदभावे पितृव्यादिसपिंडः तदभावेन्यः कश्चित् ॥ यत्र पुनरुपनयनं प्रायश्चित्तत्वेनोक्तं तत्र पर्षदुपदिष्टविधिना
तदेव कार्यम्। यत्र तु प्रायश्चित्तांतरसहितं विहितं तत्रोक्तविधिना प्रायश्चित्तं संस्कार्येण कारयित्वा आचार्येण
तस्योपनयनं कार्यम् ॥ यत्र च जातकर्मादिसंस्कारसहितमुपनयनं विहितं तत्र जातकर्मादिचौलांतसंस्कारान्
कृत्वा कार्यम् ॥ पुनरुपनयनं ग्रामाद्बहिः प्राच्यामुदीच्यां वा गत्वा कार्यम् ॥ अथ प्रायश्चित्तपूर्वकपुनरुपनयन
विधानम् ॥ तत्रादौ ब्राह्मे मुहूर्ते उत्थाय प्रातःस्मरणं कृत्वा उषसि दंतधावनपूर्वकं स्नात्वा संध्यादिनित्य
कां० ५ क्रियां प्रातः संपाद्य शरीरशुद्ध्यर्थं प्रायश्चितं कुर्यात् ॥ तद्यथा--तत्र तावत् नदीतडागादिकं गत्वा सुप्रक्षालित
तत्तीरे स्नानोपकरणानि संस्थाप्य ततः पाणिपादं प्रक्षाल्य नाभिमात्रं जलं गत्वा कुशपवित्रहस्तो बद्धशिख
आचामेत् ॥ ततो देशकालौ संकीर्त्य मम अमुकदोषपरिहारार्थं पुनरुपनयनाधिकारार्थं शरीरशुद्ध्यर्थंच
ममुकप्रायश्चित्तांगभूतान्यादौ भस्मादिभिरष्टौ स्नानानि करिष्ये। इति संकल्प्य वामहस्ते दक्षिणहस्तेन यज्ञि

यभस्म गृहीत्वा पश्चादुदकमिश्रणानंतरं दक्षिणहस्तेन संमर्द्य अभिमंत्रयेत्॥ तत्र मंत्राः। ॐ अग्निरिति भस्म। ॐ वायुरिति भस्म। ॐ जलमिति भस्म। ॐ स्थलमिति भस्म। ॐ व्योमेति भस्म। ॐ सर्वᳬं ह वा इदं भस्म। ॐ मन एतानि चक्षूंषि भस्मानीत्यभिमंत्र्य ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ॥ ब्रह्माधि पतिर्ब्रह्मणोधि प तिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ १ ॥ ॐ ईशानाय नमः। इति शिरसि मर्दयेत्। ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात् ॥ २ ॥ ॐ तत्पुरुषाय नमः। इति मुखे०। ॐ अघोरेभ्योथ घोरेभ्यो घोरघोरतरेभ्यः ॥ सर्वेभ्यः शर्वसर्वेभ्यो नमस्तेऽअस्तु रुद्ररूपेभ्यः ॥ ३ ॥ ॐ अघोराय नमः। इति हृदये०। ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमः ॥ ४ ॥ ॐ वामदेवाय नमः। इति गुह्ये०। ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ॥ भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः ॥ ५ ॥ ॐ सद्योजाताय नमः। इति पादयोर्मर्दयेत् ॥ ॐ प्रसद्य भस्मना योनिमपश्च पृथि

सं० प्र० वीमग्ने ॥ सर्ठंसृज्य मातृभिष्ट्वं ज्योतिष्मान् पुनरासदः ॥ ६ ॥ इति मंत्रेण प्रणवेन वा सर्वाङ्गे च भस्म 2
११० विलिंपेत् ॥ ततः स्नात्वा आचम्य गोमयस्नानं कुर्यात् । तद्यथा । शुद्धगोमयमादाय प्रणवेन दिक्षु दक्षि
णभागं तीर्थें चोत्तरभागं प्रक्षिप्य शेषं ॐ अग्रमग्रश्चरंतीनामौषधीनां रसं वने ॥ तासां वृषभपत्नीनां
पवित्रं कायशोधनम् ॥ यन्मे रोगांश्च शोकांश्च पापं मे हर गोमय ॥ १ ॥ ॐ मानस्तोकेतनयेमानऽआयुषि
मानोगोषुमानोऽअश्वेषुरीरिषः ॥ मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तः सदमित्वाहवामहे ॥ २ ॥ इत्यभिमंत्र्य
सूर्याय दर्शयित्वा ॐ गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥
कां० ५ ॥ १ ॥ इति मंत्रेण दक्षिणहस्तगृहीतेन गोमयेन शिरसो नाभ्यंतं वामहस्तगृहीतेन मंत्रावृत्या नाभितः पाद
पर्यंतं विलेपनमिति सर्वांगमालिप्य स्नात्वा द्विराचामेत्॥ अथ मृत्तिकास्नानम् ॥ शुद्धतीर्थमृत्तिकामादाय अश्व
क्रांते रथक्रांते विष्णुक्रांते वसुंधरे ॥ मृतिके हर मे पापं यन्मया कायसंचितम् ॥ १ ॥ उद्धृतासि वराहेण कृष्णेन
शतबाहुना ॥ मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ॥ २ ॥ त्वया हतेन पापेन सर्वपापैः प्रमुच्यते ॥ इत्य

भिमंत्र्य ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳪसुरेस्वाहा ॥ १ ॥ इति मंत्रेण शिरःप्रभृत्यं
गानि विलिंपेत ॥ ततो द्विराचम्य शुद्धोदकस्नानं कुर्य्यात् ॥ ॐ आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ महे
रणायचक्षसे ॥ १ ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ २ ॥ तस्माऽअरंगमामवोय
स्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ ३ ॥ इति स्नात्वा आचम्य पंचगव्यस्नानं कुर्य्यात् ॥ तत्र ॐ तत्स
वितु० इति गायत्र्या गोमूत्रस्नानम् ॥ १ ॥ गंधद्वारेति गोमयस्नानम् ॥ ॐ गंधद्वारां दुराधर्षां नित्यपुष्टां करी
षिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ २ ॥ आप्यायस्वेति पयःस्नानम् ॥ ॐ आप्यायस्वसमेतु
तेविश्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसंगथे ॥ ३ ॥ दधिक्राव्णेति दधिस्नानम् ॥ ॐ दधिक्राव्णोऽअकारिषञ्जि
ष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूᳪषितारिषत् ॥ ४ ॥ तेजोसीत्याज्यस्नानम् ॥ ॐ तेजोसि
शुक्रमस्यमृतमसिधामनामासिप्रियंदेवानामनाधृष्टंदेवयजनमसि ॥ ५ ॥ देवस्येति कुशोदकस्नानम् ॥ ॐ देव
स्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ ६ ॥ एवं पंचगव्यस्नानं कृत्वा शुद्धोदकेन स्नात्वा जले

सं०प्र० ॐ ऋतंचसत्यं० इत्यघमर्षणम् ॥ ॐ द्रुपदादिवेति च वारत्रयमावर्तयेत् । ततः स्नानाङ्गतर्पणं सव्येन ॥ प्राङ्
 मुखः ॐ ब्रह्मादयो देवास्तृप्यंताम् ॥ १ ॥ ॐ गौतमादय ऋषयस्तृप्यंताम् ॥ १ ॥ इति देवतीर्थेन एकैकमंजलिं
जले क्षिपेत्॥तत उदङ्मुखो यज्ञोपवीतं कंठं कृत्वा ॐ सनकादयो मनुष्यास्तृप्यंताम् ॥ इति॥२॥ प्रजापतितीर्थेन
अंजलिद्वयं दद्यात् ॥ ततोऽपसव्येन दक्षिणामखः कृष्णतिलोदकैः ॐ कव्यवाडनलादयो देवपितरस्तृप्यंताम्
॥३॥ ॐ अस्मत्पितृपितामहप्रपितामहास्तृप्यंताम् ॥ ३ ॥ ॐ अस्मन्मातृपितामहीप्रपितामह्यस्तृप्यंताम् ॥ ३ ॥
ॐ अस्मन्मातामहप्रमातामहवृद्धप्रमातामहास्तृप्यंताम् ॥ ३ ॥ ॐ अस्मन्मातामहीप्रमातामहीवृद्धप्रमाता
कां०५ मह्यस्तृप्यंताम् ॥ ३ ॥ ॐ आब्रह्मस्तम्बपर्यंतं जगत्तृप्यताम् ॥ ३ ॥ एवं तर्पणं कृत्वा ॐ यन्मया दूषितं तोयं
मलैः शारीरसंभवैः ॥ तस्य पापस्य शुद्ध्यर्थं यक्ष्मैतत्ते तिलोदकम् ॥ १ ॥ इति यक्ष्मणे जलं दद्यात् ॥ ततस्ती
रमागत्य ॐ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ॥ भूमौ दत्तेन तृप्यंतु तृप्ता यांतु परां गतिम् ॥
॥ १ ॥ इति जलांजलिं तटे निक्षिपेत् ॥ एवं स्नानांगतर्पणं कृत्वा सव्येनाचम्य सूर्यायार्घ्यं दद्यात् । ॐ एहि

सूर्य सहस्रांशो तेजोराशे जगत्पते । अनुकंपय मां देव गृहाणार्घ्यं नमोस्तु ते ॥ १ ॥ ततो जलाद्बहिर्निष्क्रम्य अहतं श्वेतं सदशं धौतं वस्त्रं परिधाय उपवस्त्रं गृहीत्वा त्रिराचम्य गृहं गच्छेत् ॥ इति नद्यादिस्नानप्रयोगः ॥

अथ प्रायश्चित्तप्रयोगः ॥ स्वासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य अमुक दोषपरिहारार्थं पर्षदुपदिष्टं प्रायश्चित्तं करिष्ये ॥ इति संकल्प्य । पापानुसारेण चांद्रायणादिव्रतं तदशक्तौ धेनुदानं तदशक्तौ यथाशक्ति धेनुमूल्यं वा गायत्रीजपं पादचारेण तीर्थयात्रादि तद्द्वारा प्रायश्चित्तं संस्कार्येण पर्षदुपदिष्टं कारयेत् । तत आचार्यो देशकालौ स्मृत्वा अमुकदोषपरिहारार्थं पुनरुपनयनसंस्कारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं स्वस्योपनेतृत्वाधिकारसिद्ध्यर्थं च कृच्छ्रत्रयात्मकप्रायश्चित्तं वा तत्प्रत्याम्नायगोनिष्क्रयीभूतयथाशक्तिरजतद्रव्यदानपूर्वकं द्वादशसहस्रगायत्रीजपं अहं वा ब्राह्मणद्वारा करिष्ये इति संकल्प्य तदैव जपं कुर्यात् ॥ एवमेव संस्कार्योपि देशकालौ संकीर्त्य ममामुककामचारामुककामवादामुकभक्षणामुकप्रत्यंतदेशगमनादिदोषपरिहारार्थं श्रीपरमेश्वरप्रीत्यर्थं कृच्छ्रत्रयात्मकप्रायश्चि

तत्प्रत्याम्नायगोनिष्क्रयीभूतयथाशक्तिरजतदानपूर्वकं द्वादशसहस्रं द्वादशाधिकसहस्रं वा गायत्रीजपं ब्राह्मण द्वारा अहमाचरिष्ये ॥ इति कारयित्वा प्रायश्चित्तहोमं कुर्य्यात् ॥ ततो हस्तमात्रं चतुरस्रं स्थंडिलं कृत्वा कुशैः परिसमुह्य तानैशान्यां निक्षिप्य गोमयोदकेनोपलिप्य स्रुवमूलेन प्रागग्रं त्रिरुल्लिख्य अनामिकांगुष्ठाभ्यां मृद मुद्धृत्य जलेनाभ्युक्ष्य कांस्यपात्रेण अग्निं प्रतिष्ठापयेत् ॥ ततः कुशकंडिकां कृत्वा अग्निपर्युक्षणांते ब्रह्मणा न्वारब्धः आज्येन ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम ॥ १ ॥ ॐ इंद्राय स्वाहा इदं० ॥ २ ॥ ( इत्या घारौ ) ॐ अग्नये स्वाहा इदं० ॥ १ ॥ ॐ सोमाय स्वाहा इदं० ॥ २ ॥ ( इत्याज्यभागौ ) जुहुयात् ॥ ततोऽ नन्वारब्धेः आज्यप्लुतपलाशसमिधमादाय ॐ पुनस्त्वादित्यारुद्रावसवः समिन्धतांपुनर्ब्रह्माणोवसुनीथयज्ञैः घृतेनत्वन्तन्वंवर्धयस्वसत्याः संतुयजमानस्यकामाः स्वाहा ॥ १ ॥ ॐ पुनर्म्मनः पुनरायुर्म्मऽआगन् पुनः प्राणः पुनरात्मामऽआगन् पुनश्चक्षुः पुनः श्रोत्रंमऽआगन् ॥ वैश्वानरोऽअदब्धस्तनूपाऽअग्निर्नः पातुदुरितादवद्यात् स्वाहा ॥ २ ॥ इति जुहुयात् ॥ ततश्चरुहोमः ॥ ॐ सप्ततेऽअग्नेसमिधः सप्तजिह्वाः सप्तऽऋषयः सप्तधामप्रिया

णि सप्तहोत्राः सप्तधात्वायजंति सप्तयोनीराप्टणस्वाघृतेन स्वाहा ॥ १ ॥ ॐ यत्तेपवित्रमर्चिष्यग्नेविततमंतरा
ब्रह्मतेनपुनातुमास्वाहा ॥ २ ॥ ॐ पवमानः सोऽ अद्यनः पवित्रेणविचर्षणिः यः पोतासपुनातुमास्वाहा ॥ ३ ॥
ॐ उभाभ्यांदेवसवितः पवित्रेणसवेनच माम्पुनीहिविश्वतः स्वाहा ॥ ४ ॥ इति ॥ ततोन्वारब्धः स्थालीपाकेन ॐ
अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते ॥ १ ॥ तत आज्येन ॐ भूः स्वाहा इदमग्नये ॥ १ ॥ ॐ भुवः
स्वाहा इदं वायवे ॥ २ ॥ ॐ स्वः स्वाहा इदं सूर्य्याय ॥ ३ ॥ ॐ त्वन्नोऽअग्ने० स्वाहा इदमग्नीवरुणाभ्याम् ॥ १ ॥
ॐ सत्वन्नोऽ अग्ने० स्वाहा इदमग्नीवरुणाभ्याम् ॥ २ ॥ ॐ अयाश्चाग्ने० स्वाहा इदमग्नये ॥ ३ ॥ ॐ येतेशतं०
स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च ॥ ४ ॥ ॐ उदुत्तमम्० स्वाहा इदं वरु
णाय ॥ ५ ॥ ॐ प्रजापतये स्वाहा इदं प्रजापतये ॥ इति नवाहुतीर्हुत्वा । ततः फलपुष्पचंदनघृतपूर्णस्रुवेण ॐ
मूर्द्धानंदिवोऽअरतिंपृथिव्यावैश्वानरमृतऽआजातमग्निंकविꣳसम्राजमातिथिंजनानामासन्नापात्रंजनयन्तदेवाःस्वा
हा इदमग्नये ॥ इतिपूर्णाहुतिं दद्यात् ॥ तत ॐ त्र्यायुषंजमदग्नेरिति ललाटे । कश्यपस्यत्र्यायुषमिति ग्रीवा

स०प्र० याम् । यद्देवेषुत्र्यायुषमिति दक्षिणांसे । तन्नोऽअस्तुत्र्यायुषमिति हृदि । इत्यनामिकाग्रगृहीतभस्मना त्र्यायुषं
११२ कुर्यात् ॥ ततः संस्रवप्राशनमाचमनं च कृत्वा ब्रह्मणे पूर्णपात्रदानं ब्रह्मग्रंथिविमोकं च कुर्यात ॥ ततः प्रणीतोद
केन ॐ सुमित्रियानऽओषधयः संत्विति मूर्धानमभिषिच्य ॐ दुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्म
इतीशान्यां प्रणीतां न्युब्जीं कृत्वा बर्हिरुत्थाप्य ॐ देवागातु० इति मंत्रेण हस्तेनैव जुहुयात् ॥ एवं होमशेषं
समाप्य आचार्याय सवत्सां गां दद्यात् ॥ तदशक्तौ गोनिष्क्रयं दद्यात् ॥ अदाने प्रत्यवायी भवति । तस्मादेव
दद्यात ॥ इति प्रायश्चित्तविधानम् ॥ अथ पुनरुपनयनप्रयोगः ॥ कृतमंगलस्नानो धृतकुंकुमादितिलकः कर्ता
कां०५ शुभासने प्राङ्मुख उपविश्य स्वदक्षिणतः संस्कार्यं चोपवेश्य आचम्य प्राणानायम्य देशकालौ स्मृत्वा अस्य
संस्कार्यस्य अमुकदोषपरिहारपूर्वकं पुनःसंस्कारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमुपनयनसंस्कारं करिष्ये ॥
इति संकल्प्य तदंगतया गणपतिपूजनं पुण्याहवाचनादिनांदीश्राद्धांतं कृत्वा अधिकारार्थं ब्राह्मणत्रयं संस्कार्यं
च भोजयित्वा तं स्नापयित्वा वपनमेखलाजिनदंडभैक्ष्यचर्याव्रतादिभिर्विना प्रयोगानुसारेण उपनयनं कुर्य्यात्॥

ब्रह्मचर्याऽभावात् [ तथा च मनुपराशरौ ] अजिनं मेखला दंडो भैक्ष्यचर्या व्रतानि च ॥ निवर्तंते द्विजातीनां पुनः संस्कारकर्मणि ॥ १ ॥ ततो बहिः शालायां हस्तमात्रपरिमितं चतुरस्रं स्थंडिलं कृत्वा कुशत्रयेण परिसमुह्य तान् कुशानैशान्यां निःक्षिप्य गोमयोदकेनोपलिप्य स्रुवमूलेन प्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्योल्लेखनक्रमेण अनामिकांगुष्ठाभ्यां मृदमुद्धृत्यैशान्यां क्षिप्त्वा तं देशं जलेनाभिषिच्य नवीनकांस्यपात्रेणाग्निमानीय स्वाभिमुखं समुद्भवनामानमग्निं प्रतिष्ठापयेत्। तत आचार्यः संस्कार्यं पश्चादग्नेः स्वस्य दक्षिणतोऽवस्थाप्य ब्रह्मचर्यमागामितिब्रूहीति संस्कार्यं प्रति वदति । ब्रह्मचर्यमागामिति संस्कार्यः प्रतिब्रूयात् । ब्रह्मचार्यसानीति ब्रूहीत्याचार्येणोक्ते ब्रह्मचार्यसानीति संस्कार्यो ब्रूयात्। तत आचार्यः ॐ येनेंद्रायबृहस्पतिर्वासः पर्यदधादमृतंतेनत्वापरि दधाम्यायुषेदीर्घायुत्वायबलायवर्चसे ॥१॥ इति मंत्रेण यथोक्तमधोवासः परिधापयति । ततः आचमनं कृत्वा यज्ञोपवीतधारणाधिकारार्थं यज्ञोपवीतसहितं सदक्षिणं भांडाष्टकं ब्राह्मणेभ्यो दत्त्वा यज्ञोपवीतं परिदध्यात्॥ तत्रादौ आचार्यो यज्ञोपवीतमभिमंत्रयेत्। तद्यथा। आपोहिष्ठेति तिसृभिर्ऋग्भिरुपवीतं प्रक्षा

ल्य ॐ ब्रह्मयज्ञानं० ॥ १ ॥ ॐ इदम्विष्णु० ॥ २ ॥ ॐ नमस्तेरुद्र० ॥ ३ ॥ इति तिसृभिर्ऋग्भिरुपवीते अंगुष्ठं भ्रामयेत्। पुनस्तथैव नवतंतुषु देवताः विन्यसेत्। तद्यथा। प्रथमतंतौ ओंकारं न्यसामि ॥ १ ॥ द्वितीये० ॐ अग्निं न्यसामि ॥ २ ॥ तृतीये० ॐ नागान् न्यसामि ॥ ३ ॥ चतुर्थे० ॐ सोमं० ॥ ४ ॥ पंचमे० ॐ इंद्रं० ॥५॥ षष्ठे० ॐ प्रजापतिं० ॥ ६ ॥ सप्तमे० ॐ वायुं० ॥ ७ ॥ अष्टमे० ॐ सूर्यं० ॥ ८ ॥ नवमे० ॐ विश्वान् देवान् न्यसामि ॥ ९ ॥ इति नवतंतुदेवताः न्यस्य गंधादिभिः संपूज्य ॐ उपयामगृहीतोसिसावित्रोसिचनोधाश्चनो धाऽअसिचनोमयिधेहि ॥ जिन्वयज्ञंजिन्वयज्ञपतिंभगायदेवायत्वासवित्रे ॥ १ ॥ इति मंत्रेण सूर्याय प्रदर्शयेत् ॥



तत उपवीतं करसंपुटे निधाय दशगायत्र्याभिमंत्रयेत् ॥ ॐ तत्सवितु० ॥ १० ॥ ततो यज्ञोपवीतधारणम्। ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्॥ अयुष्यमग्र्यं प्रतिमुंच शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥१॥ इति मंत्रं पठितवतः संस्कार्यस्य दक्षिणबाहुमुद्धृत्य वामस्कंधे यज्ञोपवीतं निवेशयति ॥ आचमनम् ॥ ततः आचार्यः स्वकीयमंजलिं जलेन पूरयित्वा तेन जलेनांजलिस्थेन संस्कार्यस्यांजलिं पूरयति। ॐ आपोहिष्ठा

मयोभुवस्तानऽऊर्जेदधातन ॥ महेरणायचक्षसे ॥१॥ ॐ योवः शिवतमोरसस्तस्यभाजयतेहनः उशतीरिवमातरः ॥२॥ ॐ तस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथआपोजनयथाचनः ॥३॥ इति तिसृभिर्ऋग्भिः सूर्यायार्घ्यंदद्यात् ॥ ततो गुरुः संस्कार्यं प्रेषयति सूर्यमुदीक्षस्वेति। माणवकश्च प्रेषितः। ॐ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत्। पश्येमशरदः शतं जीवेमशरदः शतꣳ शृणुयामशरदः शतं प्रब्रवामशरदः शतमदीनाःस्यामशरदःशतंभूयश्चश रदःशतात् ॥१॥ इति मंत्रेण सूर्यमुदीक्षते ॥ ततः आचार्यो माणवकस्य दक्षिणांसस्योपरि स्वं दक्षिणं हस्तं नीत्वा हृदयमालभते । ॐ मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं ते अस्तु मम वाचमेकमना जुषस्व बृहस्पति ष्ट्वानियनक्तु मह्यामितिमंत्रेण ॥ ततः आचार्यो माणवकस्य दक्षिणं हस्तं सांगुष्ठं गृहीत्वा को नामासीत्याह। एवं पृष्टः संस्कार्यः अमुकशर्माहं भोः। एवं त्रिः प्रतिप्रत्याह। पुनराचार्यः पृच्छति। कस्य ब्रह्मचार्यसीति । भवत इति माणवकेनोच्यमाने ॐ इंद्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवामुकशर्मेत्याचार्यः पठेत् ॥ अथैनं संस्कार्यं भूतेभ्यः परिददात्याचार्यः। तत्र मंत्रः। ॐ प्रजापतये त्वा परिददामि। देवाय त्वा सवित्रे परिददामि।

सं०प्र० अद्भ्यस्त्वौषधीभ्यः परिददामि । द्यावापृथिवीभ्यां त्वा परिददामि । विश्वेभ्यस्त्वा देवेभ्यः सर्वेभ्यस्त्वा भूतेभ्यः
११५ परिददाम्यरिष्ट्यै ॥ १ ॥ अथ संस्कार्यः अग्निं प्रदक्षिणीकृत्य आचार्यस्योत्तरत उपविशति । आचार्यश्च ब्रह्मो
पवेशनादिपर्युक्षणांतं चरुवर्ज्यं कृत्वा पर्युक्षणानंतरम् आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजाप
त्यांतं स्विष्टकृच्चैताश्चतुर्दशाहुतीर्जुहुयात् । तद्यथा । ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ॥ १ ॥ ॐ
इंद्राय स्वाहा ॥ इदं० ॥ २ ॥ ॐ अग्नये स्वाहा । इदमग्नये० ॥ ३ ॥ ॐ सोमाय स्वाहा । इदं सोमाय० ॥ ४ ॥
ॐ भूः स्वाहा । इदमग्नये० ॥ ५ ॥ ॐ भुवः स्वाहा । इदं वायवे० ॥ ६ ॥ ॐ स्वः स्वाहा । इदं सूर्याय० ॥ ७ ॥
कां० ५ ॐ त्वन्नोऽअग्ने० स्मत्स्वाहा । इदमग्नीवरुणाभ्यां० ॥ ८ ॥ ॐ सत्वन्नोऽअग्ने० एधिस्वाहा । इदमग्नीवरुणाभ्यां०
॥ ९ ॥ ॐ अयाश्चाग्ने० जर्ठ स्वाहा । इदमग्नये अयसे० ॥ १० ॥ ॐ येतेशतं० स्वर्काः स्वाहा । इदं वरुणाय
सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च० ॥ ११ ॥ ॐ उदुत्तमम्० स्यामस्वाहा । इदं वरुणाया
दित्यायादितये० ॥ १२ ॥ ॐ प्रजापतये स्वाहा । इदं प्रजापतये० ॥ १३ ॥ ॐ अग्नये स्विष्टकृते स्वाहा । इद

मग्नये स्विष्टकृते० ॥ १४ ॥ ततः संस्रवप्राशनं पवित्राभ्यां मार्जनम् अग्नौ पवित्रप्रतिपत्तिः पूर्णपात्रवरयोरन्यतरस्य ब्रह्मणे दानम् । प्रणीताविमोकश्च । एवं होमं समाप्य अनंतरम् एनं ब्रह्मचारिणं संशास्ति । कथम् । ब्रह्मचार्यसीत्याचार्यो वदति । असानीति ब्रह्मचारी । अपोशानेत्याचार्यः । अश्नानीति ब्रह्मचारी । कर्मकुर्वित्याचार्यः । करवाणीति ब्रह्मचारी । मा दिवा सुषुप्स इत्याचायः । न स्वपानीति ब्रह्मचारी । वाचं यच्छेत्याचार्यः । यच्छानीति ब्रह्मचारी । समिधमाधेहीत्याचार्यः । आदधानीति ब्रह्मचारी । अपोशानेत्याचार्य । अश्नानीति ब्रह्मचारी । अथास्मै एवं शासिताय ब्रह्मचारिणे आचार्यः सावित्रीमन्वाह । कीदृशाय । उत्तरतोऽग्नेः प्रत्यङ्मुखोपविष्टाय पादोपसंग्रहपूर्वकमुपसन्नाय आचार्यं समीक्षमाणाय स्वयमप्याचार्येण समीक्षिताय । कथम् । ॐ कारव्याहृतिपूर्वकं प्रथमं पच्छः । एकैकपादम् । तथा द्वितीयमर्द्धर्चशः । तथैव । तृतीयं सर्वां स्वयं च ब्रह्मचारिणा सह पठेत् ॥ तत्र मंत्रः । हरिः ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि । धीयो यो नः प्रचोदयात् ॥ १ ॥ ( सद्यस्त्वेव गायत्रीं ब्राह्मणायानुब्रूयात् । त्रिष्टुभां सावित्रीं

सं०प्र० क्षत्रियाय । जगतीं सावित्रीं वैश्याय ब्रूयात् इत्युपदेशः ) ॥ अत्रावसरे ब्रह्मचारी समिदाधानं करोति ।
११६ तत्रादौ आचार्यस्यदक्षिणदिशि अग्निपश्चिमोपविष्टो घृताक्तशुष्कनिषिद्धेतरेंधनं दक्षिणहस्तेन जुहुयात् ॥
तत्र मंत्राः । ॐ अग्ने सुश्रवः सुश्रवसं मा कुरु ॥ १ ॥ ॐ यथा त्वमग्ने सुश्रवः सुश्रवा असि ॥ २ ॥
ॐ एवं माᳫंसुश्रवः सुश्रवसं कुरु ॥ ३ ॥ ॐ यथा त्वमग्ने देवानां यज्ञस्य निधिपाऽअसि ॥ ४ ॥
ॐ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ॥ ५ ॥ इत्येतैः पंचभिर्मंत्रैः प्रतिमंत्रमिंधनप्रक्षेपः ॥
( शिष्टास्तु शुष्कगोमयखंडैरेतत्कुर्वंति ) ततः प्रदक्षिणमग्निं पर्युक्ष्य उत्थाय स्वप्रादेशमितां घृताक्तपला
का० ५ शसमिधमादाय तिष्ठन् ॐ अग्नये समिधमाहार्षं बृहते जातवेदसे यथा त्वमग्ने समिधा समिध्यसऽएव
महमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिंधे जीव पुत्रो ममाचार्यो मेधाव्यहमसान्यनि
राकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासᳫंस्वाहा ॥ १ ॥ इति मंत्रेण जुहुयात् ॥ ततोऽनेनैव
मंत्रेण समिदन्तरद्वयं जुहुयात् ॥ तत उपविश्य पूर्ववत् । ॐ अग्ने सुश्रवःसुश्रवसं मा कुरु ॥ १ ॥ ॐ यथा

त्वमग्ने सुश्रवः सुश्रवा असि ॥ २ ॥ ॐ एवं माꣳसुश्रवः सुश्रवसं कुरु ॥ ३ ॥ ॐ यथा त्वमग्ने देवानां यज्ञस्य निधिपाऽअसि ॥ ४ ॥ ॐ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ॥ ५ ॥ इति पंचभिर्मंत्रैः प्रतिमंत्रमिंधनप्रक्षेपः ॥ ततस्तूष्णीं पाणी प्रतप्य वक्ष्यमाणैः सप्तभिर्मंत्रैः प्रतिमंत्रं मुखमवमृशति । ॐ तनूपाऽअग्नेसितन्वम्मेपाहि ॥ १ ॥ ॐ आयुर्दाऽअग्नेऽस्यायुर्मेदेहि ॥ २ ॥ ॐ वर्च्चोदाऽअग्नेसिवर्च्चोमेदेहि ॥ ३ ॥ ॐ अग्ने यन्मेतन्वाऽऊनन्तन्मऽआपृण ॥ ४ ॥ ॐ मेधांमेदेव सविताऽआदधातु ॥ ५ ॥ ॐ मेधांमेदेवीसरस्वतीआदधातु ॥ ६ ॥ ॐ मेधामश्विनौदेवाधत्तांपुष्करस्रजौ ॥ ७ ॥ इत्येते मुखमार्जनमंत्राः ॥ अथ शिष्टाचारपरिप्राप्ताः केचन पदार्था लिख्यंते ॥ ॐ अंगानि च मऽआप्यायंतामिति मंत्रेण शिरःप्रभृति पदांतं सर्वांगान्यालभते । दक्षिणहस्ताग्रेण । ॐ वाक्चमऽआप्यायताम् । इति मुखालंभनम् । ॐ प्राणश्चमऽआप्यायतामिति नासिकयोरालंभनम् । ॐ चक्षुश्चमऽआप्यायतामिति चक्षुषी युगपत् । ॐ श्रोत्रंचमऽआप्यायतामिति दक्षिणश्रोत्रम् । अनेनैव मंत्रेण वामश्रोत्रम् । ॐ यशोबलंचमऽआप्यायतामिति बाह्वोरुपस्पर्शनम् ॥ ततरुथा

सं० प्र० युषकरणम् ॥ स्रुवेण भस्मानीय दक्षिणकरानामिकागृहीतभस्मना ॐ त्र्यायुषं जमदग्नेरिति ललाटे । ॐ
११७ कश्यपस्य त्र्यायुषमितिग्रीवायाम् । ॐ यद्देवेषु त्र्यायुषमिति दक्षिणांसे । ॐ तन्नोऽअस्तु त्र्यायुषमिति हृदि ॥
इति त्र्यायुषाणि कुरुते ॥ अथ स्मृत्यंतरोक्तमभिवादनं लिख्यते ॥ व्यस्तपाणिभ्यां पृथिवीं स्पृशन् अमुक
गोत्रोऽमुकप्रवरोऽमुकशर्माहं भो वैश्वानर त्वामभिवादये इति त्रिः ३ वैश्वानरमभिवाद्य पुनस्तेनैव क्रमेण ।
अमुकगोत्र० भो आचार्य त्वामभिवादये । इत्युक्त्वाऽभिवाद्य वृद्धानभिवादयेत ॥ आयुष्मान् भव सौम्य अमु
कशर्मन्नित्याचार्यो ब्रूयात् । एवमेव सूर्यं वरुणं चाप्यभिवादयेत् । इत्यभिवादनम् ॥ (तथाच योगियाज्ञवल्क्यः)
कां० ५ दक्षिणं पादमालभ्य पाणिना दक्षिणेन तु । सव्येन सव्यं स्प्रष्टव्यमभिवादनकर्मणि ॥ व्यस्तस्थपाणिना कार्यं
मग्निं सूर्यं गुरुं तथा पुनरुपनयने भिक्षाचर्या न कार्या । ततः आचार्यादीन् गंधादिभिः संपूज्य तेभ्यो दक्षिणां
दत्त्वा तैराशिषो गृहीत्वा स्थापितदेवताः विसृज्य द्वादश ब्राह्मणान् भोजयेत् ॥ इति संस्कारप्रकाशे
पुनरुपनयनप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

अथ शूद्रविवाहकाण्डः ॥ उक्त्वा द्विजानामुद्वाहविधिं कृत्स्नं समंत्रकम् ॥ अधुना शूद्रजातीनां क्रिया मात्रं वितन्यते ॥१॥ शूद्रस्य शूद्रापरिणयने मंत्ररहितं क्रियामात्रं कार्यमिति हरिहरभाष्ये उक्तम् । तेन काती यं कर्मोच्यते ॥ तत्र प्रयोगः । विवाहदिने तत्पूर्वदिने वा कन्यापिता प्रातर्मातृकापूजनपुरःसरं नांदीश्राद्धं विधा य विवाहोक्ते मुहूर्त्ते कन्यापिता स्नातः शुक्लांबरधरो मंडपे उपविश्य आचम्य कन्याया जातकर्मादिसंस्कारलो पप्रायश्चित्तं कुर्यात् ॥ तद्यथा । दक्षिणहस्ते यथाशक्ति हिरण्यादिद्रव्यं जलादीनि चादाय विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य ब्रह्मणो द्वितीयपरार्द्धे तदादौ श्रीश्वेतवाराहकल्पे सप्तमे वैवस्वतमन्वंतरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जंबूद्वीपे भरतखण्डे तत्रापि परमपवित्रे भारते वर्षे आर्यावर्त्तांतर्गतब्रह्मावर्तैकदेशे कुमारिकानामक्षेत्रे श्रीगंगायमुनयोरमुकदिग्भागे नर्मदाया अमुके तटे बौद्धाव तारे अमुकनामसंवत्सरे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकराशिस्थे चंद्रे अ मुकराशिस्थिते सूर्ये अमुकराशिस्थेदेवगुरौ एवंग्रहगुणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोऽमुकदासोऽहं मम अस्याः कन्याया जातकर्मादिचूडांतसंस्कारलोपजन्यप्रत्यवायपरिहारार्थं प्रतिसंस्कारमर्धं कृच्छ्रं तत्प्रत्याम्ना

०प्र० यगोनिष्क्रयीभूतं यथाशक्ति इदं रजतं चंद्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दातुमहमुत्सृजे । इति सं
११८ कल्प्य साक्षतोदकं द्रव्यं ब्राह्मणाय दद्यात् ॥ ततः स्वस्तीति प्रतिवचनम् । पुनर्देशकालौ संकीर्त्य ममास्याः क
न्यायाः भर्त्रा सह धर्मप्रजोत्पादनगृह्यपरिग्रहधर्माचरणेष्वधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं विवाहाख्यं सं
स्कारकर्म करिष्ये।तदंगतया विहितं गणेशपूजनं स्वस्तिवाचनं नवग्रहकुलदेवतापूजनं कलशस्थापनं च करि
ष्ये ॥ इति च संकल्प्य गणेशं पूजयेत् ॥ तत्रादौ ध्यानम् । शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं
ध्यायेत्सर्वविघ्नोपशांतये ॥ १ ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ॥ सर्वविघ्नहरस्तस्मै गणाधिपतये
कां० ५ नमः ॥ २ ॥ सुमुखश्चैकदंतश्च कपिलो गजकर्णकः ॥ लंबोदरश्च विकटो विघ्ननाशो विनायकः ॥ ३ ॥ धूम्र
केतुर्गणाध्यक्षो भालचंद्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ ४ ॥ विद्यारंभे विवाहे च
प्रवेशे निर्गमे तथा ॥ संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ ५ ॥ स्वस्ति श्रीमहागणाधिपतये नमः ॥ अथातः
संप्रवक्ष्यामि गणयागं सुखावहम् ॥ काम्यके वासिके यज्ञे विवाहे व्रतसंयमे ॥ १ ॥ आदौ गणेश्वरः पूज्यः सर्वं

कामफलप्रदः ॥ मासमासाधिपं देवं गाणपत्यं लभेन्नरः ॥ २॥ येनासौ पूजितो यज्ञ मासाचार्यः प्रपूजितः ॥
कोसौ मासपतिर्देवो ह्यत्र धूपेन धूपितः ॥ ३ ॥ ज्येष्ठमासे कृतं पूज्य यज्ञकाले सनातनम् ॥ मंडलं प्रथमं पूज्य
कोष्ठद्वादशमुत्तमम् ॥ ४ ॥ सिंदूरेणार्चितो देव ईशाने तु विनायकः ॥ ग्रहयुक्तं ततः स्थाप्य मासे मासाधिकं
फलम् ॥ ५ ॥ गणाधिपं मार्गशीर्षे पौषे विनायकं तथा ॥ गजवक्रं च माघे च भालचंद्रं च फाल्गुने ॥ ६ ॥ चैत्र
मासे तु वेदांग वैशाखे शिवसूनुकम् ॥ ज्येष्ठे शिवसुतं पूज्य आषाढे हरनंदनम् ॥ ७ ॥ श्रावणे तापसं देवं भाद्रे
च मोदकप्रियम् ॥ आश्विने च महावीर्यं महावीर्यं च कार्त्तिक ॥ ८ ॥ विघ्नहर्तारमधिके मासि पूज्य गणेश्व
रम् ॥ गंधपुष्पैस्तथा धूपैः कर्पूरैर्यक्षकर्दमैः ॥ ९ ॥ मृगमदैः कुकुमैश्च सिंदूरेण विशेषतः ॥ रक्तोत्पलदलैः ।
पूज्य बिल्वपत्रेण केशरैः ॥ १० ॥ मालतीकेतकीपुष्पैर्हेमपुष्पैर्विचक्षणः ॥ अर्घ्यं धूपं च दीपं च रक्तवस्त्रेणच्छा
दनम् ॥ ११ ॥ पूजायां कुरुते देवे दद्यान्मोदकभोजनम् ॥ नमो देवगणेशाय नमस्ते विघ्ननाशन ॥१२॥ नमस्ते
मूषकारूढ शुभकाराय वै नमः ॥ नमः कात्यायनीपुत्र लंबकर्णाय वै नमः ॥ १३ ॥ गजदंत विरूपाक्षमन्विद्या

सं०प्र० बुद्धिविचक्षण ॥ देहि मे पुत्रसौभाग्यं देहि मे सुखसंपदम् ॥ १४ ॥ इच्छासमधिपं देवं वरं विनायकेश्वरम् ॥
११९ शत्रूणां दुष्टा ये केचिदुर्ज्जनाश्चैव येखिलाः ॥ १५ ॥ तेषां दंडहितार्थाय प्रार्थये त्वां गणेश्वरम् ॥ प्रथमं पूजा
गणेशस्य शांतिश्चैव विशेषतः ॥ १६ ॥ नाशयेत्सर्वदुष्टानि कल्याणं च भवेत्सदा ॥ कृष्णेन भाषितं पूर्वं देवता
परिकीर्तिता ॥ १७ ॥ मंडलं यत्र यज्ञे च भोक्ता तत्र विनायकः ॥ गणयागविहीनो यो निष्फलं तस्य जायते
॥ १८ ॥ हरते सर्वविघ्नानि त्वत्प्रसादो विनायक ॥ आयुःकर्ता शांतिकर्ता वरदो भव पूजितः ॥ १९ ॥ इति
गणयागः ॥ अथावाहनम् । पुष्याण्यादाय ॥ हे हेरंब त्वमेह्येहि अंबिकात्र्यंबकात्मज ॥ सिद्धिबुद्धियुत त्र्यक्ष सर्व
कां० ५ लोकपितुः पितः ॥१॥ नागास्य नागहार त्वं गणनाथ चतुर्भुज ॥ भूषितः स्वायुधैर्दिव्यैः पाशांकुशपरश्वधैः ॥२॥
आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः ॥ इहागत्य गृहाण त्वं पूजा क्रतुं च रक्ष मे ॥ ३ ॥ श्रीगणेश इह
गच्छ इह तिष्ठ इत्यावाह्य श्रीगणेशाय नमः पादयोः पाद्यं समर्पयामि । अर्घ्यं समर्पयामि । आचमनीयं
समर्पयामि । स्नानं समर्पयामि । वस्त्रं सम० । गंधं सम० । अक्षतान्सम० । पुष्पणि समर्पयामि ॥ धूपमा

घ्रापयामि । दीपं दर्शयामि । नैवेद्यं समर्पयामि । आचमनं स० । पूगीफलतांबूलं स० । दक्षिणां समर्पयामि ॥ एवं षोडशोपचारैः संपूज्य ॥ वक्रतुंड महाकाय सूर्यकोटिसमप्रभ । अविघ्नं कुरु मे देव सर्वकार्य्येषु सर्वदा ॥ १ ॥ इति प्रार्थयेत ॥ अनेन पूजनेन सिद्धिबुद्धिसहितः श्रीगणेशः सांगः प्रीयताम् ॥ इति गणेशपूजनम् । अथ स्वस्तिवाचनम् ॥ करोतु स्वस्ति ते ब्रह्मा स्वस्ति चापि द्विजातयः ॥ सरीसृपाश्च ये श्रेष्ठास्तेभ्यस्ते स्वस्ति सर्वदा ॥ १ ॥ ययातिर्नहुषश्चैव धुंधुमारो भगीरथः ॥ तुभ्यं राजर्षयः सर्वे स्वस्ति कुर्वंतु नित्यशः ॥२॥ स्वस्ति तेस्तु द्विपादेभ्यश्चतुष्पादेभ्य एव च ॥ स्वस्त्यस्त्वपादकेभ्यश्च सर्वेभ्यः स्वस्ति सर्वदा ॥३॥ स्वाहा स्वधा शची चैव स्वस्ति कुर्वंतु ते सदा ॥ लक्ष्मीररुंधती चैव कुरुतां स्वस्ति तेऽनघ ॥ ४ ॥ असितो देवलश्चैव विश्वामित्रस्तथांगिराः ॥ स्वस्ति तेद्य प्रयच्छंतु कार्तिकेयश्च षण्मुखः ॥ ५ ॥ विवस्वान् भगवान्स्वस्ति करोतु तव सर्वदा ॥ दिग्गजाश्चैव चत्वारः क्षितिश्च गगनं ग्रहाः ॥ ६ ॥ अधस्ताद्धरणीं योसौ नागो धारयते सदा ॥ शेषश्च पन्नगश्रेष्ठः स्वस्ति तुभ्यं प्रयच्छतु ॥ ७ ॥ इति स्वस्तिवाचनम् ॥ [ततः पुण्याहवाचनं कुर्यात्] ॥ अथ नव

सं०प्र० ग्रहपूजनम् ॥ हस्ते पुष्पाण्यादाय ॥ पद्मयोनिं चतुर्मूर्तिं वेदगर्भं पितामहम् ॥ आवाहयेत्तं ब्रह्माणं कमलोद्भूतमंग
१२० लम् ॥ १ ॥ भगवन् ब्रह्मन्निहागच्छ इह तिष्ठ॥ देवदेवं जगन्नाथं भक्तानुग्रहकारकम् ॥ चतुर्भुजं रमानाथं विष्णु
मावाहयाम्यहम् ॥ २ ॥ भगवन्न विष्णो इहा० ॥ पंचवक्त्रं वृषारूढमुमेशं च त्रिलोचनम् ॥ आवाहयामि देवशं
शिवं खट्वांगधारिणम् ॥ ३ ॥ भगवन् शिव इहागच्छ० ॥ दिवाकरं सहस्रांशुं सुरासुरनमस्कृतम् ॥ लोकनाथं
विश्वनेत्रं सूर्यमावाहयाम्यहम् ॥ १ ॥ भगवन्सूर्य इहागच्छ इहतिष्ठ ॥ हिमरश्मिनिशानाथं क्षीरसागरसंभवम् ॥
ओषधीनां तु राजानं सोममावाहयाम्यहम् ॥ २ ॥ भो सोम इहागच्छ इह तिष्ठ ॥ धरणीगर्भसंभूतं लोहितांगं
कां० ५ सुवर्चसम् ॥ कुमारं क्रूरकर्माणं भौममावाहयाम्यहम् ॥ ३ ॥ भो भौम इहागच्छ इह तिष्ठ ॥ बुधं बुद्धिप्रदा
तारं सोमवंशविवर्धनम् ॥ यजमानहितार्थाय बुधमावाहयाम्यहम् ॥ ४ ॥ भो बुध इहागच्छ इह तिष्ठ ॥ बुद्धि
श्रेष्ठोंगिरःपुत्रो देवानां यो गुरुः स्मृतः ॥ तमिंद्रमंत्रिणं भक्त्या गुरुमावाहयाम्यहम् ॥ ५ ॥ भोगुरो इहागच्छ
इह तिष्ठ ॥ प्रविष्टो जठरं शंभोर्निसृतः पुनरेव यः ॥ तं सुरारिगुरुं भक्त्या शुक्रमावाहयाम्यहम् ॥ ६ ॥ भो शुक्र

इहागच्छ इह तिष्ठ ॥ धर्मराजानुजं देवं भिन्नांजनसमप्रभम् ॥ छायामार्तंडसंभूतं शनिमावाहयाम्यहम् ॥ ७ ॥
भोः शनैश्चर इहागच्छ इह तिष्ठ ॥ चक्रेण छिन्नमूर्द्धानं विष्णुना च निरीक्षितम् । सैंहिकेयं महाकायं राहुमावाह
याम्यहम् ॥ ८ ॥ भो राहो इहागच्छ इह तिष्ठ ॥ अंजनाभं महारौद्रं बहुरूपं महाग्रहम् ॥ क्रूरकर्ममहाकायं
केतुमावाहयाम्यहम् ॥ ९ ॥ भोः केतो इहागच्छ इह तिष्ठ ॥ एवमावाहनं स्थापनं च कृत्वा । सूर्यादिग्रहेभ्यो
नमः ॥ इति नाममंत्रेण षोडशोपचारैः पूजयेत् ॥ ततः प्रार्थना ॥ ब्रह्मा मुरारिस्त्रिपुरांतकारिर्भानुः शशी भूमि
सुतो बुधश्च ॥ गुरुश्च शुक्रः शनिराहुकेतवः सर्वे ग्रहाः शांतिकरा भवंतु ॥ १ ॥ ततः । जयंती मंगला काली भद्र
काली कपालिनी ॥ दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोस्तु ते ॥ १ ॥ इति कुलदेवतां संपूजयेत् ॥ ततः
ईशान्यां कलशस्थापनम् ॥ तत्रादौ भूमि संपूज्य । पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । कलशा
धारभूतं हि पवित्रं कुरु चासनम् ॥ १ ॥ इति भूमि स्पृशेत् । ततः । यवोसि धान्यराजोसि सर्वोत्पत्तिकरः
शुभः । प्राणिनां जीवनोपायः कलशाधः क्षिपाम्यहम् ॥ २ ॥ इति धान्यं क्षिप्त्वा तस्योपरि कलशं स्थापयेत् ॥

सं॰म॰ गंगे च यमुने चैव गोदावरि सरस्वति ॥ नर्मदे सिंधु कावेरि कुंभेस्मिन्सन्निधिं कुरु ॥ ३ ॥ इति जलेनापूर्य्य
१२१ गंधं क्षिप्त्वा सर्वौषधीःपंचपल्लवान् दूर्वां सप्तमृदः पंचरत्नानि च निक्षिपेत् ॥ ततः । जीवनं सर्वलोकानां
लज्जाया रक्षणं परम् ॥ सुवेषधारि वस्त्रं हि कलशे वेष्टयाम्यहम् ॥ ४ ॥ इति रक्तवस्त्रेणावेष्ट्य । धान्यपूर्णमिदं
पात्रं स्थापितं कलशे यतः ॥ तेनायं कलशः पूर्णः पूर्णाः सन्तु मनोरथाः ॥ ५ ॥ इति पूर्णपात्रं निधाय। फलेन
फलितं सर्वं त्रैलोक्यं सचराचरम्। तस्मात्फलप्रदानेन पूर्णाः संतु मनोरथाः ॥ ६ ॥ इति नारिकेलं स्थाप
येत् ॥ ततः पुष्पमालादिभिः शोभितं कृत्वा । तत्र गणेशवरुणौ पूजयेत् । लंबोदरं महाकायं गजवक्त्रं
कां॰ ५ चतुर्भुजम्। आवाहयाम्यहं देवं गणेशं सिद्धिदायकम् ॥ १ ॥ भो गणेश इहागच्छ इह तिष्ठ ॥ मकरस्थं
पाशहस्तं शुभ्रवर्णं किरीटिनम् ॥ आवाहये प्रतीचीशं वरुणं जलनायकम् ॥ २ ॥ भो वरुण इहागच्छ
इह तिष्ठ ॥ इत्यावाह्य । गणेशवरुणाभ्यां नमः इति पूजयेत् ॥ ततः कलशाभिमंत्रणम्। कलशस्य मुखे
विष्णुः कंठे रुद्रः समाश्रितः । मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ १ ॥ कुक्षौ तु सागराः

सप्त सप्तद्वीपा वसुंधरा ॥ ऋग्वेदोथ यजुर्वेदः सामवेदोप्यथर्वणः ॥ २ ॥ अंगैश्च सहिताः सर्वे कलशं तु समा
श्रिताः ॥ २ ॥ [ प्रार्थना ] देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोसि यदा कुंभ विधृतो विष्णुना स्वयम्
॥ ३ ॥ त्वत्तः सर्वाणि तीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥
॥ ४ ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ ५ ॥
सर्वेपि त्वयि तिष्ठंति यतः कामफलप्रदाः । त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे
देव प्रसन्नो भव सर्वदा ॥ ६ ॥ इति कलशस्याभिमंत्रणं प्रार्थना च ॥ ॥ अथ रक्षाविधानम् ॥ गौरसर्ष
पाक्षतविकिरणम् । गणाधिपं नमस्कृत्य नमस्कृत्य पितामहम् ॥ विष्णुं रुद्रं श्रियं देवीं वंदे भक्त्या सर
स्वतीम् ॥ १ ॥ स्थानाधिपं नमस्कृत्य ग्रहनाथं निशाकरम् ॥ धरणीगर्भसंभूतं शशिपुत्रं बृहस्पतिम् ॥
॥ २ ॥ दैत्याचार्यं नमस्कृत्य सूर्यपुत्रं महाग्रहम् ॥ राहुं केतुं नमस्कृत्य यज्ञारंभे विशेषतः ॥ ३ ॥
शक्राद्या देवताः सर्वा मुनींश्च कथयाम्यहम् ॥ गर्गं मुनिं नमस्कृत्य नारदं मुनिसत्तमम् ॥ ४ ॥ वसिष्ठं मुनिशा

दूर्लं विश्वामित्रं तथैव च ॥ व्यासं मुनिं नमस्कृत्य सर्वशास्त्रविशारदम् ॥ ५ ॥ विद्याधिका ये मुनय आचार्याश्च तपोधनाः ॥ तान्सर्वान्प्रणमाम्येव यज्ञरक्षाकरान्सदा ॥ ६ ॥ पूर्वे रक्षतु गोविंद आग्नेय्यां गरुडध्वजः ॥ याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋते ॥ ७ ॥ वारुण्यां केशवो रक्षेद्वायव्यां मधुसूदनः ॥ उत्तरे श्रीधरो रक्षेदीशाने तु गदाधरः ॥ ८ ॥ ऊर्ध्वे गोवर्धनो रक्षेदधस्ताच्च त्रिविक्रमः ॥ एवं दश दिशो रक्षेद्वासुदेवो जनार्दनः ॥ ९ ॥ शंखो रक्षेच्च यज्ञाग्रे पृष्ठे खड्गस्तथैव च ॥ वामपार्श्वे गदा रक्षेद्दक्षिणे तु सुदर्शनः ॥१०॥ ब्रह्माणं माधवो रक्षेत्त्वाचार्यं पातु माधवः ॥ यजमानं सपत्नीकं कमलाक्षश्च रक्षतु ॥ ११ ॥ रक्षाहीनं तु यत्स्थानं तत्सर्वं रक्षताद्धरिः ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा ॥ १२ ॥ स्थानं त्यक्त्वा त तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ अपक्रामंतु भूतानि पिशाचाः सर्वतोदिशम् ॥ १३ ॥ सर्वेषामवरोधेन शुभकर्म समारभे ॥ इति रक्षाविधानम् ॥ ततो ब्राह्मणानां हस्तेषु रक्षाबंधनं गंधादिभिः पूजनं च कार्यम् ॥ तत आचाराद्यजमानवरयोरपि ॥ तत्र मंत्रौ । येन बद्धो बली राजा दानवेंद्रो महाबलः ॥ तेन त्वामनुबध्नामि रक्षे माचल माचल ॥ १ ॥ इति रक्षाबंधनम् ।

लक्ष्मीनारायणौ देवौ सावित्रीकमलासनौ ॥ पार्वतीशंकरौ देवौ मंगलं तिलकं ददु: ॥ १ ॥ इति तिलकाशी
र्वाद: ॥ इति गणपत्यादिपूजाविधानम् ॥ अथ विवाहविधानम् । कन्यापिता गृहागतं वरं संमानेनोपवेश
यित्वा आसनं दत्त्वा मधुपर्कपूजां कुर्यात् ॥ तद्यथा ॥ दाता पश्चात्तिष्ठंतं वरं साधुभवानास्तामर्चयिष्यामो
भवंतमिति ब्रूयात् ॥ अर्चय इति वर: ॥ ततो विष्टरमादाय । विष्टरो विष्टरो विष्टर इत्यन्येनोक्ते । विष्टर:
प्रतिगृह्यतामिति दाता वदेत् ॥ विष्टरं प्रतिगृह्णामीत्यभिधाय वरो विष्टरं गृहीत्वा विष्टराय नम: इत्यासने
उत्तराग्रं धृत्वोपविशेत् ॥ तत: पाद्यपात्रमादाय पाद्यं पाद्यं पाद्यमित्यन्येनोक्ते पाद्यं प्रतिगृह्यतामिति दाता वदेत् ॥
पाद्यं प्रतिगृह्णामीत्यभिधाय वर: पाद्यमंजलिनादाय आदौ सव्यं ततो दक्षिणमिति पादौ प्रक्षालयेत् ॥ तत:
पूर्ववद्विष्टरांतरं गृहीत्वा चरणयोरधस्तादुत्तराग्रं वर: कुर्यात् ॥ ततो दूर्वाक्षतफलपुष्पगंधसर्षपदधियुतमर्घ्यं पात्र
मादाय अर्घ्योऽर्घ्योऽर्घ इत्यन्येनोक्ते अर्घ्य: प्रतिगृह्यतामिति दाता वदेत् ॥ अर्घ्यं प्रतिगृह्णामीत्यभिधाय अर्घ्यं
गृहीत्वा अर्घ्यो नम: इत्यंजलिना शिरसाभिवाद्य भूमौ क्षिपेत् ॥ तत: आचमनीयपात्रमादाय आचमनीयमा

सं०प्र० चमनीयमाचमनीयम् । इत्यन्येनोक्ते । आचमनीयं प्रतिगृह्यतामिति दाता वदेत् ॥ आचमनीयं प्रति
१२३ गृह्णामीत्यभिधाय दात्रा दत्तं वरः प्रतिगृह्य अद्भ्यो नमः । इति सकृत्प्राश्याचामेत् ॥ ततः कांस्यपात्रस्थदधिम
धुघृतानि कांस्यपात्रपिहितान्यादाय । मधुपर्को मधुपर्को मधुपर्कः । इत्यन्येनोक्ते । मधुपर्कः प्रतिगृह्यतामिति
दाता वदेत् ॥ मधुपर्कं प्रतिगृह्णामीत्यभिधाय दातृहस्तस्थमुद्घाट्य मित्राय नमः इत्यवेक्ष्य । सवित्रे नमः इति
प्रतिगृह्य । वामहस्ते कृत्वा । मधुपर्काय नमः इत्यनामिकयालोड्य अनामिकांगुष्ठाभ्यां बहिः क्षिप्त्वा पुनरेवं द्विः
कृत्वा अनामिकांगुष्ठाभ्यां त्रिः प्राश्नीयात् ॥ ततः शेषमसंचरदेशे धृत्वा द्विराचम्यांगानि संस्पृशेत् ॥ वाचे नमः
कां० ५ इति मुखे ॥ प्राणाय नम इति नासिकयोः ॥ चक्षुर्भ्यां नम इति चक्षुषोः ॥ श्रोत्राभ्यां नम इति कर्णयोः ॥ बलाय
नम इति बाह्वोः ॥ ओजसे नम इत्यूर्वोः ॥ अंगेभ्यो नम इति शिरः प्रभृतीनि पादांतानि सर्वगात्राणि हस्ताभ्यां
संस्पृश्याचामेत् ॥ ततः गौर्गौर्गौरित्यन्येनोक्ते यजमानेन च प्रत्युक्ते । वरः । रुद्राणां मात्रे वसूनां दुहित्रे आदित्य
स्वस्रे गवे नमः॥ इति नत्वा । ममार्चकस्य च पाप्मा हत इत्युच्चैर्ब्रूयात् ॥ तत आचार्यो वेद्यां हस्तमात्रं स्थण्डिलं

दर्भैः परिसमुह्य गोमयेनोपलिप्य स्रुवमूलेन प्रागग्रास्तिस्रो रेखाः कृत्वा त्रिर्मृदमनामिकांगुष्ठाभ्यामुद्धृत्य जले नाभ्युक्ष्य तत्र तूष्णीमेव अग्निं प्रतिष्ठापयेत् ॥ ततः कौतुकागारात्कन्यामानीय मंडपे उपविश्य कन्यापिता वराय वस्त्रचतुष्टयं दद्यात् ॥ ततो वरो वस्त्रचतुष्टयमध्ये द्वे आयुष्मतीदं वासः परिधत्स्वेति आवृत्त्या कन्यायै दद्यात् ॥ सा च वाससे नम इत्यावृत्त्या परिदध्यात् ॥ ततः स्वयमपि । वाससे नमः इति वस्त्रद्वयं परिधत्ते ॥ ततःदात्रा वधूमीक्षस्वेति प्रेषितो वरः विश्वेभ्यो देवेभ्यो नम इति वधूमीक्षेत । ततः कन्याप्रदकर्तृकं वधूवरयोर्ग्रंथि बंधनम् । हस्तलेपनम् । शाखोच्चारणं च ॥ अथ कन्यादानम् ॥ तत्रादौ कन्यापिता उदङ्मुख उपविश्य स्वदक्षिणे पत्नीमुपवेश्य कुशपाणिराचम्य स्वदक्षिणहस्ते दूर्वाक्षतफलपुष्पचंदनजलान्यादाय । देशकालौ स्मृत्वा । अमुक गोत्रोऽमुक दासोहं मम समस्तपितॄणां निरतिशयसानंदब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलावाप्तये अनेन वरेण अस्यां कन्यायामुत्पादयिष्यमाणसंतत्या ब्राह्मपक्षे द्वादशावरान् द्वादश परान् प्राजापत्यपक्षे अष्टावरान् अष्टौ परान् पुरुषान् पवित्रीकर्तुमात्मनश्च श्रीलक्ष्मीनारायणप्रीतये ब्राह्मविवाहविधिना प्रजापत्यविवाहविधिना

सं०प्र० वा अलंकृत्य कन्यादानं करिष्ये ॥ इति संकल्प्य पठेत् ॥ कन्यां कनकसंपन्नां कनकाभरणैर्युताम् ॥ दास्यामि
१२४ विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥ १ ॥ विश्वंभरः सर्वभूताः साक्षिण्यः सर्वदेवताः ॥ इमां कन्यां प्रदास्यामि
पितॄणां तारणाय च ॥ २ ॥ ततः कांस्यपात्रे वरहस्तोपरि वधूहस्तं धृत्वा । वरहस्ते सुप्रोक्षितमस्तु ॥ शिवा
आपः संतु ॥ सौमनस्यमस्तु ॥ अक्षतं चारिष्टं चास्तु ॥ गंधाः पांतु ॥ अक्षताः पांतु ॥ पुष्पाणि पांतु ॥
इत्युक्त्वा ॥ कन्या तारयतु पुण्यं वर्धतां शांतिः पुष्टिस्तुष्टिश्चास्तु ॥ तिथिकरणमुहूर्तनक्षत्रसंपदस्तु ॥
पुण्याहं भवंतो ब्रुवंतु ॥ पुण्याहमिति विप्राः ॥ स्वस्ति भवंतो ब्रुवंतु ॥ ऋद्धिं भवंतो ब्रुवंतु ॥ श्रीरस्तु
कां० ५ इति भवंतो ब्रुवंतु ॥ अस्त्विति सर्वत्र विप्राः प्रतिवचनं दद्युः । एवं पुण्याहवाचनं कृत्वा देशकालौ
संकीर्त्य । अमुकदासोहं मम समस्तपितॄणां निरतिशयसानंदब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलावा
प्तये अनेन वरेणास्यां कन्यायामुत्पादयिष्यमाणसंतत्या ' ब्राह्मपक्षे द्वादशावरान् द्वादशपरान् । प्राजापत्य
पक्षे अष्टाववरान् अष्टौ परान् पुरुषान् पवित्रीकर्तुमात्मनश्च श्रीलक्ष्मीनारायणप्रीतये काश्यपगोत्रस्य

अमुकदासस्य प्रपौत्राय । अमुकदासस्य पौत्राय । अमुकदासस्य पुत्राय । अमुकनामदासाय वराय ॥
अमुकगोत्रस्यामुकदासस्य प्रपौत्रीम् । अमुकदासस्य पौत्रीम् । अमुकदासस्य पुत्रीम् । अमुकनाम्नीं कन्यां
प्रजापतिदैवत्यां । पुनरेवं द्विरुच्चार्य । शतज्योतिष्टोमातिरात्रफलसमफलप्राप्तिकामः प्रजोत्पादनार्थं सहधर्मचर
णार्थं भार्यात्वेन तुभ्यमहं संप्रददे । इति कुशयवयुतं जलं कन्याहस्तं च वरहस्ते क्षिपेत् ॥ ततो वरः प्रतिगृह्णा
मि स्वस्तीत्युक्त्वा भुवं स्पृशेत् ॥ गौरीं कन्यामिमां भोस्त्वं यथाशक्ति विभूषिताम् ॥ गोत्राय चैव दासाय तुभ्यं
दत्तां समाश्रय ॥ १ ॥ कन्ये ममाग्रता भूयाः कन्ये मे देवि पार्श्वयोः ॥ कन्ये मे पृष्ठतो भूयास्त्वद्दानात्स्वर्गं
माप्नुयाम् ॥ २ ॥ मम वंशकुले जाता पालिता वत्सराष्टकम् ॥ तुभ्यं दास मया दत्ता पुत्रपौत्रप्रवर्द्धिनी ॥ ३ ॥
इति प्रार्थयेत् ॥ ततः । कृतैतत्कन्यादानप्रतिष्ठार्थमिदं सुवर्णं वा गोमिथुनं तन्मूल्यं रजतं वा दक्षिणात्वेन
तुभ्यमहं संप्रददे इति दद्यात् ॥ ततः शक्त्या सत्यां कांस्यारकूटपात्रवस्त्राभरणगवाश्वदासीदासादि दद्यात् ।
कन्याबांधवाश्च यौतकं दद्युः ॥ ततस्तां पाणौ गृहीत्वा प्रतिग्रहस्थानात् निष्क्रम्याग्निसमीपमागच्छेत् ॥

सं० प्र० अत्रावसरे कश्चिज्जलपूर्णं कुभं स्कंधे निधायाग्नेर्दक्षिणत उत्तरतो वाऽभिषेकपर्यंतं वाग्यत उर्ध्वं तिष्ठेत् ॥ ततो
१२५ वधूपित्रा परस्परं समीक्षितव्यमित्युक्तेऽन्योन्यं समक्ष्य। अरौद्रचक्षुरपतिघ्नीशिवाचसुमनास्तथा ॥ सुवर्चाः
वीरसूर्देवकामाचसुखदाभव ॥ १ ॥ सोमगंधर्वाग्निपूषभ्योनमः इति मंत्रांते परस्परं निरीक्षणम् ॥ अथाग्नि
कर्म ॥ आचार्योऽग्नेर्दक्षिणतो ब्रह्मणे आसनं दत्त्वा तमुपवेश्य मृन्मये पात्रे जलपूर्णे कुशान्निधाय उत्तरतः
कुशेषु निधाय। अग्निं दर्भैः पूर्वादितः परिस्तीर्य पात्रासादनं कुर्यात् ॥ तत्र। त्रीणि तृणानि । द्वे कुशपत्रे ।
प्रोक्षणीपात्रम्। आज्यस्थाली ॥ संमार्जनकुशाः ५। उपयमनकुशाः ७। समिधस्तिस्रः ३ । स्रुवः । आज्यं
कां० ५ गव्यम्। तंडुलपूर्णपात्रम्। शमीपत्रमिश्रा लाजाः। शूर्पम्। अश्मा। दक्षिणा। कन्याभ्राता। एतानि पूर्वपूर्वदिशि
क्रमेणासादनीयानि ॥ ततः प्रादेशमात्रे पवित्रे छित्त्वा प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय पवित्राभ्यां त्रि
रुत्पवनम्। ततः प्रोक्षणीपात्रस्य सव्यहस्ते करणं पवित्राभ्यां त्रिरुद्दिंगनं प्रणीतोदकेन प्रोक्षणीप्रोक्षणम्। प्रोक्ष
णीजलेन यथासादितवस्तुसेचनम् ॥ अग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रनिधानम् । स्थाल्यामाज्यं निरूप्याग्नौ

दक्षिणेधिश्रित्योल्मुकेन लाजैः सह पर्यग्नि कृत्वा स्रुवं प्रतप्य कुशैः संमृज्य प्रोक्षणीजलेन प्रोक्ष्य पुनः प्रतप्य दक्षिणे निधाय आज्यमुद्वास्योत्पूय अवेक्ष्य अपद्रव्यनिरसनम् ॥ पुनः प्रोक्षणीरुत्पूय उपयमनकुशानादायो त्थायाग्नौ तिस्रः समिधः प्रक्षिप्याग्निं प्रोक्षणीजलेन पर्युक्ष्य ब्रह्मणान्वारब्धः दक्षिणं जान्वाच्य समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहोति ॥ [ विप्रद्वारा स्वाहांतो होमः ] प्रजापतये स्वाहा इदं प्रजापतये १ इंद्राय स्वाहा इद मिंद्राय २ इत्याघारौ अग्नये स्वाहा इदमग्नये ३ सोमाय स्वाहा इदं सोमाय ४ [इत्याज्यभागौ] अग्नये स्वाहा इदमग्नये १ वायवे स्वाहा इदं वायवे २ सूर्याय स्वाहा इदं सूर्याय ३ अग्नीवरुणाभ्यां स्वाहा इदमग्नीवरुणाभ्या म् ४ ( पुनः ) अग्नीवरुणाभ्यां० इदं० ५ अग्नये स्वाहा इदं० ६ वरुणसवितृविष्णुविश्वेदेवमरुत्स्वर्केभ्यः स्वाहा इदं वरुणादिभ्यः ॥ ७ ॥ वरुणायादित्यायादितये स्वाहा इदं वरुणायादित्यायादितये च ॥ ८ ॥ प्रजापतये स्वाहा इदं० ॥ ९ ॥ अग्नये स्विष्टकृते स्वाहा इदं० ॥ १० ॥ ततः । अग्नये स्वाहा इदमग्नये इति त्रिर्जुहुयात् ॥ ३ ॥ वैवस्वताय स्वाहा इदं० १ अन्तः पटम् ॥ मृत्यवे स्वाहा इदं मृत्यवे [ प्रणीतोदकस्पर्शः ]

सं०१० अथ लाजाहोमः ॥ तत्रादौ वरांजलिपुटोपरिसंलग्नवध्वंजलिघृताभिघारितवधूभ्रातृदत्तशूर्पस्थशमीपत्रमिश्रैर्ला
१२६ जैर्वधूकर्तृको होमः ॥ अर्यम्णे नमः इदमर्यम्णे १ अग्नये नमः इदमग्नये २ अग्नये नमः इदमग्नये ३ इति त्रिर्जु
हुयात् ॥ ततो वरो वध्वा दक्षिणं हस्तं सांगुष्ठमुत्तानेन हस्तेन गृह्णीयात्। तत्र मंत्रः ॥ भगार्यमसवितृभ्यो नमः ॥
वित्तसौम्यगुणैर्युक्ता वीरसूर्जीवसूर्भव ॥ कुले मदीये सम्राज्ञी मच्चित्तानुगता सदा ॥१॥ ततो गृहीतामेव वधूमुत्तर
तोग्नेर्दक्षिणपादेनाश्मानमारोहयाति॥ कन्यायै नमः१ सरस्वत्यै नमः२ इति गाथा गायन्ती। ततोग्रे वधूःपश्चाद्वरः।
अग्नये नमः १ इति अग्निं परिक्रम्य पुनर्द्विर्लाजाहोमादिपरिक्रमांतं कृत्वा चतुर्थे शूर्पकोणेन वधूभ्राता सर्वला
कां० ५ जान् कन्यांजलावावपति तान् भगाय नमः। इति तिष्ठंती जुहोति ॥ ततोग्रे वरः पश्चाद्वधूरग्निं चतुर्थं परिक्रम्य
उपविश्य ब्रह्मणान्वारब्धः आज्येन। प्रजापतये नमः। इदं प्रजापतये ॥ इति जुहुयात् ॥ [ अत्र सेवरादान
मिति मरुदेशाचारः ] अथ समाचारादंतःपटम् ॥ तत्र श्लोकाः ॥ स्थानं प्रधानं न बलं प्रधानं स्थाने स्थितः
कापुरुषोऽपि धीरः ॥ जानामि नागेंद्र तव प्रभावं कंठे स्थितो गर्जसि शंकरस्य ॥ १ ॥ गर्जे यदा तृणवच्छेद

यामि दृष्ट्वा ब्रह्मा देवतानां च मुख्यः ॥ वैरं मध्ये वैनतेयः पृदाकोस्तयोरन्तः पट्टमादत्त नूनम् ॥ २ ॥ मण्डपं मधुपर्कंश्चलाजाहोमस्तथैव च ॥ यावत्कन्या न वामांगे तावत्कन्या कुमारिका ॥ ३ ॥ अथ चतुर्युगानि ॥ यदा भवे पृथिवी कृतयुगमधितोयं तदा भवे पृथिवी अचलस्य स्तंभः । आकाशमंडपम् समुद्रकलशः सुवर्णपात्रम् रत्नाक्षताः ब्रह्माचार्यः कन्या च गौरी वरः श्रीश्वरो देवदेवः पुण्यकाले वर तुभ्यं नित्यं ददातु ॥ गंधर्वश्चैव तत्सर्वं दंपत्यो रक्षतां सदा । गंधर्वौ देवतारूप आशीर्वादं ददातु नौ ॥ १ ॥ यदा भवे पृथिवी त्रेतायुगमाधि तोयं तदा भवे पृथिवी सुवर्णस्य स्तंभः पट्टवस्त्रमण्डपम् रजतस्य पात्रम् गंगायाः कलशः मुक्ताफलाक्षता बसिष्ठ आचार्यः कन्या च सीता वरः श्रीरामचंद्रो देवदेवः पुण्यकाले वर तुभ्यं ददातु ॥ चित्तचित्तीति तत्सर्वानाहु तीनां त्रयोदश ॥ रक्षते च उमा रुद्रविश्वेदेवैः समन्विता ॥ २ ॥ यदा भवे पृथिवी द्वापरयुगमधितोयं तदा भवे पृथिवी श्रीखंडचंदनस्य स्तंभः भोजपत्रमंडपम् ताम्रस्य कलश मुक्ताफलाक्षता दुर्वासा आचार्यः कन्या च द्रौपदी वरः श्रीमदर्जुनो देवदेवः पुण्यकाले वर तभ्यं नित्यं ददातु ॥ गोविंदो गोकुले जातः क्रीडितो

सं०प्र० गोपबालकैः ॥ तुष्टिपुष्टिकरोऽस्माकमायुरारोग्यकारकः ॥ ३ ॥ यदा भवे पृथिवी कलियुगमधितोयं
१२७ तदा भवे पृथिवी हरिद्वंशस्य स्तंभः सूत्रवस्त्रमण्डपम् मृन्मयकलशं तंडुलाक्षताः माघ आचार्यः कन्या
च भानुमती वरः श्रीभोजराजो देवदेवः पुण्यकाले वर तुभ्यं नित्यं ददातु ॥ चिरंजीवो महातेजा उभ
योश्च चिरायुषम् ॥ प्रयच्छतु हरिर्देवो मनसा चिंतितं ध्रुवम् ॥ ४ ॥ इति चतुर्युगानि ॥ ततोऽग्नेरुत्तरतः ।
उदक्संस्थान्सप्ततंडुलपुंजान् कृत्वा तेषु एनां वधूं सप्तपदाक्रमणं वरः कारयति ॥ तत्र मंत्राः ॥ इषे नमः
विष्णवे नमः ऊर्ज्जे नमः १ विष्णवे नमः २ रायस्पोषाय० विष्णवे नमः ३ मयोभवाय० विष्णवे नमः ४
कां० ५ प्रजाभ्यो० विष्णवे नमः ५ पातुभ्यो० विष्णवे नमः ६ सखिभ्यो० विष्णवे नमः ७ ॥ इति सप्तपदाक्रमणम् ॥
ततः पूर्वकुंभोदकेन वरः आम्रपल्लवैरभिषिंचेत् ॥ अद्भ्यो नमः ॥ इति ॥ ततो वरेण सूर्यमुदीक्षस्वेत्युक्ते । सूर्याय
नमः । इति सूर्यं पश्येत ॥ अस्तमिते सूर्ये ध्रुवमुदीक्षस्वेत्युक्त्वा ध्रुवाय नमः ॥ इति ध्रुवं पश्यति ॥ ततो वरः ॥
मम तव चित्तवाग्भ्यो नमः । इति मंत्रेण वधूदक्षिणांसोपरि हस्तं नीत्वा हृदयमालभते । [ ततो हस्तमो

चनमिति लोकाचारः ] अत्र समाचाराद्वधूं वरस्य वामभागे उपवेशयंति ॥ तत्र कन्यावाक्यानि ॥ तीर्थव्रतोद्यापनदानयज्ञान् मया सह त्वं यदि कांत कुर्याः ॥ वामांगमायामि तदा त्वदीयं जगाद वाक्यं प्रथमं कुमारी ॥ १ ॥ हव्यप्रदानैरमरान् पितृंश्च कव्यप्रदानैर्यदि पूजयेथाः ॥ वामांगमायामि तदा त्वदीयं जगाद वाक्यं वचनं द्वितीयम् ॥ २ ॥ कुटुंबरक्षाभरणे यदि त्वं कुर्याः पशूनां परिपालनं च ॥ वामांगमायामि तदा त्वदीयं जगाद कन्या वचनं तृतीयम् ॥ ३ ॥ आयव्ययं धान्यधनादिकानां पृष्ट्वा निवेशं प्रगृहं विदध्याः ॥ वामांगमायामि तदा त्वदीयं जगाद कन्या वचनं चतुर्थम् ॥ ४ ॥ देवालयारामतडागकूपवापीर्विदध्या यदि पूजयेथाः ॥ वामांगमायामि तदा त्वदीयं जगाद कन्या वचनं च पंचकम् ॥ ५ ॥ देशांतरे वा स्वपुरान्तरे वा यदा विदध्याः क्रयविक्रयं त्वम् ॥ वामागमायामि तदा त्वदीयं जगाद कन्या वचनं च षष्ठम् ॥ ६ ॥ न सेवनीया परपारकीया त्वया कदाचित्खलु कामिनापि ॥ वामांगमायामि तदा त्वदीयं जगाद कन्या वचनं च सप्तमम् ॥ ७ ॥ वर उवाच ॥ मदीयचित्तानुगतं च चित्तं यदा मदाज्ञापरिपालनं च ॥ पतिव्रताधर्मपरायणा त्वं कुर्या तदा

सं०प्र० सर्वमिदं प्रयत्नम् ॥ १ ॥ ततो वरोऽनामिकाग्रं वधूशिरसि धृत्वा वध्वै नम इत्यभिमंत्र्य सीमंते सिंदूरं ददाति ॥
१२८ ततो वधूं कश्चिद्बलवानुत्थाप्य गोश्वपुरुषेभ्यो नमः । इत्यानडुहे चर्मणि कुशेषु वा उपवेशयेत् ॥ ततः अग्नये
स्विष्टकृते नमः ॥ इदमग्नये स्विष्टकृते ॥ इति हुत्वा । संस्रवप्राशनम् आचमनं च कुर्यात् ॥ ततः पूर्णपात्रदा
नम् । देशकालौ संकीर्त्य । अद्य कृतैतद्विवाहहोमकर्मणि ब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतममुक
गोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति ब्रह्मणे दद्यात् ॥ स्वस्तीति प्रतिवचनानंतरं ब्रह्मग्रंथिवि
मोकः ॥ ततः प्रणीताजलेन पवित्राभ्यां मार्जनं तयोरग्नौ प्रक्षेपः । आचार्याय गोदानम् । होत्रे दक्षिणादानं च
कां० ५ कार्यम् ॥ ततः प्रणीताविमोकः ॥ ततो ब्राह्मणेभ्यो भूयसीं दक्षिणां दत्त्वा । तिलकनीराजनादि यथाचारं
कुर्यात् ॥ ततो गणेशादिदेवान् विसृज्य । त्रिरात्रमेकरात्रं वाऽक्षारलवणाशिनौ ब्रह्मचारिणावलंकुर्वाणावधः
शायिनौ दंपती स्याताम् ॥ चतुर्थ्यामपररात्रे च चतुर्थीकर्मकार्यम् ॥ इति संस्कारप्रकाशे शूद्रविवाहपद्धतिः
समाप्ता ॥ अथ शूद्राणां वेदमंत्रविचारः ॥ तत्र अविद्यत्वाद्वेदमंत्रे नाधिकारः ॥ तथा च श्रुतिः । गायत्र्या ब्राह्म

णमसृजत् त्रिष्टुभा राजन्यं जगत्या वैश्यं न केनचिच्छूद्रमिति ॥ व्यासजातूकर्ण्यौ । शूद्रो वर्णश्चतुर्थोऽपि वर्ण त्वाद्धर्ममर्हति ॥ वेदमंत्रस्वधास्वाहावषट्कारादिभिर्विना ॥ नृसिंहतापनीयेऽपि । सावित्रीप्रणवंयजुर्लक्ष्मीबी जंयदिजानीयात्स्त्रीशूद्रः समृतोऽधोगच्छति ॥ व्याहरणेजिह्वाछेद इति श्रुतेश्च ॥ स्कांदेऽपि । स्वाहाप्रणवसं युक्तं शूद्रे मंत्रं ददद्द्विजः ॥ शूद्रो निरयमाप्नोति ब्राह्मणः शूद्रतामियात् । एवं पुराणविष्णुसहस्रनामस्तोत्रगी तापाठेऽपि नाधिकारः । वेदांगत्वात् । तदुक्तं हरिवंशे । सुगतिमियाच्छ्रवणाच्च शूद्रजातिरिति ॥ हेमाद्रौ । आवाह नादि कर्त्तव्यं यथा शूद्रेण तच्छृणु ॥ देवानांदेवनाम्ना तु पितॄणां नामगोत्रतः ॥ व्यासजातूकर्ण्यौ । अधिकारी भवेच्छूद्रः पूर्तधर्मे न वैदिके ॥ भारतेऽपि॥मंत्र वर्जं न दुष्यंति कुर्वाणाः पौष्टिकीं क्रियाम् ॥ वृद्धपाराशरः ॥ दक्षि णार्थं तु यो विप्रः शूद्रस्य कारयेद्धविः ॥ ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत् ॥ अस्यार्थो माधवा चार्येण कृतः । यो विप्रः शूद्रस्य दक्षिणामादाय तदीयं हविः शांतिपुष्ट्यादिसिद्ध्ये वैदिकैर्मंत्रैर्जुहोति तत्र विप्र स्यैव दोषः शूद्रस्तु होमफलं लभेत इत्यर्थः ॥ विवाहशांत्यादौ नाममंत्रेण विप्रद्वारा स्वाहांतो होमः । इति मदनपालः ॥ यमस्मृतौ । शूद्रोऽप्येवंविधः कार्यो विना मंत्रेण संस्कृतः ॥ न केनचित्ससमसृजच्छंदसा तं प्रजा

पतिः ( छंदसा मंत्रेण इत्यर्थः ) व्यासः । नवैताः कर्णवेधांता मंत्रवर्जं क्रियाः स्त्रियाः ॥ विवाहो मंत्रतस्तस्याः शूद्रस्यामंत्रतो दश ॥ इति । शूद्राणां काश्यपं गोत्रमिति हेमाद्रिः ॥ शूद्रा वाजसनेयिन इति दक्षोक्तेः ॥ शूद्राणां संस्कारा वाजसनेयिशाखया कार्या इति निर्णयसिंधुकारः ॥ किं बहुना शूद्रकर्तृकविवाहशांतिदानश्राद्धादौ विप्रस्यैव पौराणमंत्रपाठः शूद्रस्य तु श्रवणमात्रम् ॥ इति शूद्रमंत्रविचारः ॥ अथ ग्रंथाऽलंकारो ग्रंथकर्तृणामुभयकुलवर्णनं च ॥ देशे विशाले हि मरौ बभूव बीकोजिनामा नृपतिः पुरा हि ॥ तस्यैव नाम्ना खलु राजधानी लोके बिकानेर इति प्रसिद्धा ॥ १ ॥ तच्छास्ता राजनीतिज्ञो गंगासिंहो महीपतिः ॥ विद्वाञ्छूरो हि धर्मात्मा गोविप्रप्रतिपालकः ॥ २ ॥ यस्य प्रीतिरभूद्रम्यां गोरुंडे सप्तमे नृपे ॥ नृपाणां भारतीयानां प्राप्तोच्चा

कां० ५ पदपद्धतिः ॥ ३ ॥ तस्यैवराज्येऽतिमनोहरे पुरे श्रीरत्नदुर्गें नृपदुर्गमे शुभे ॥ विद्यासदाचारयुतैश्चसद्द्विजैर्वैश्यैर्धनाढ्यैर्बहुभिश्चमण्डिते ॥ ४ ॥ आसीद्वसिष्ठान्वयगौडविप्रो माध्यंदिनीयो बुधजीवराजः ॥ विवृद्धमानो विदुषां समाजे सुज्ञैर्नरैः सर्वसमृद्धिभाक्सः ॥ ५ ॥ तस्यात्मजा बाणमितास्तु सद्गुणाः सुवेदविद्याध्ययने च नैपुणाः ॥ आयातयातद्विजशुद्धप्राङ्गणा वीर्येण संताडितवैरिदुर्गणाः ॥ ६ ॥ एतेषु मुख्यः किल रामकृष्णो ज्ञानेन स्वल्पी

१–२ उभयत्र मेंहेवेति ह्रस्वत्वम् ।

कृतसर्वतृष्णः ॥ स्वबुद्धितः खण्डितवैरिप्रश्नः सुभक्तिसंतर्पितदेवकृष्णः ॥ ७ ॥ तस्याऽभवन्नाममिताः सुपुत्राः स्वधर्मरक्ताः सुकलत्रमित्राः ॥ गृहेषुसंलेखितरम्यचित्राः श्रीकान्तपूजानिरताः पवित्राः ॥ ८ ॥ इमानि नामानि भवंति तेषां चतुर्भुजाख्यो विबुधोऽग्रजातः ॥ कस्तूरिचन्द्राभिधसज्जनोऽन्योऽपरो गुणीज्येष्ठमुखस्तु रामः ॥ ९ ॥ तत्रापि मध्या निजवंशपालकाः कस्तूरिचन्द्राख्यमहत्सुसत्कृताः ॥ तेषां सुपुत्रावनवंद्यवन्दितावास्तां किल द्वौ नितरांधरातले ॥ १० ॥ चातुर्थिलालाख्यगुरूमुखाख्यौ सुज्ञौ गुणाढ्यौ निजधर्मरक्तौ ॥ ज्येष्ठ स्तयोर्वै खलु पण्डिताग्र्यः श्रीशंभुपादाब्जविलग्नचित्तः ॥ ११ ॥ षट्शास्त्रवेत्ता श्रुतिकर्मरक्तः परोपकारी सुनिबंध कर्ता ॥ दाता मनस्वी द्विजदेवभक्तो हुताऽवशिष्टान्नसदानुरक्तः ॥ १२ ॥ यत्प्रसूर्हरबाईति पिता कस्तूरिच न्द्रकः ॥ मातामहश्च श्रीरामो मातुलो विष्णुदत्तकः ॥ १३ ॥ सूत्रं कात्यायनं यस्य शाखा माध्यंदिनी किल ॥ श्रीवसिष्ठकुलं वित्तं स चतुर्थाख्यपंडितः ॥ १४ ॥ एतादृशो गौडकुले शताब्द्यां निबंधकर्ता न बभूव कश्चित् ॥ द्विःषण्निबन्धा रचिता हि येन शिवस्य साम्बस्य वरप्रसादात् ॥ १५ ॥ शान्तिप्रतिष्ठाश्राद्धानां ज्योतिषोत्सर्ग कर्मणाम् ॥ अनुष्ठानविधेश्चापि संस्काराणां विधेस्तथा ॥ १६ ॥ प्रायश्चित्तस्य शुद्धेश्च वैद्यकोद्यापनस्य च ॥

सं०प्र० तथा सद्धर्मणां ग्रंथा रचिता द्वादशत्विमे ॥ १७ ॥ तत्रायं सप्तमो ग्रंथः पूर्णतामगमच्छुभः ॥ अनेन प्रीयतां
१३० शंभुर्भवान्या सह सर्वदा ॥ १८ ॥ स्वस्तिश्रीमान्महाराजो भूपालिवरहीरकः ॥ चिरं जीयात्सतां मान्यो गंगा
सिंहो महीपतिः ॥ १९ ॥ धनवृद्धिर्धर्मवृद्धिः प्रजावृद्धिः सुखप्रदा ॥ आयुर्वृद्धिश्च भूयाद्वै महाराजस्यसंततम् ॥
॥ २० ॥ श्रीमत्प्रभुप्रतापेन गोव्याघ्रादिगणोऽखिलः॥ युगपच्चैकदेशेहिजलंपास्यातिनिर्भयः ॥ २१ ॥ सर्वाः प्रजाः
प्रजायंते सुखिनःखलु राजनि ॥ श्रीमतिशासतिराज्यं विद्यावृद्धिर्भविष्याति ॥ २२ ॥ इति श्रीमन्महाराजाधिरा
जराजराजेंद्रक्षत्रियकुलार्कमरुदेशाधिपतिश्रीगंगासिंहवर्म्मबीकानेरराज्यांतर्गतश्रीरत्नगढनिवासिना गौडवं
कां० ५ शावतंसवासिष्टगोत्रोद्भवश्रीरामकृष्णामरचन्द्रयोः पौत्रेण श्रीकस्तूरीचंद्रात्मजेन श्रीचतुर्भुजदत्तसूनुना श्रीमहा
दवभक्तनानानिबंधकर्त्रा पण्डितश्रीचतुर्थीलालशर्मणा विरचिते चातुर्थीलालभास्करे महानिबंधे संस्का
रप्रकाशाख्ये सप्तमे ग्रंथे शूद्रविवाहविधानकाण्डः पंचमः समाप्तः ॥ ५ ॥ श्रीमदिष्टदेवमहेशाय नमः ॥ शम् ॥

इदं पुस्तकं मुम्बय्यां खेमराज श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाशितम्।

मुद्रक एवं प्रकाशक:
खेमराज श्रीकृष्णदास,
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
खेमराज श्रीकृष्णदास मार्ग, मुंबई - ४०० ००४.

## पुस्तकें मिलने के स्थान

१) खेमराज श्रीकृष्णदास,
श्रीवेंकटेश्वर स्टीम प्रेस,
खेमराज श्रीकृष्णदास मार्ग,
खेतवाडी, मुंबई - ४०० ००४.

२) खेमराज श्रीकृष्णदास,
६६, हडपसर इण्डस्ट्रिअल इस्टेट
पुणे - ४११ ०१३.

३) गंगाविष्णु श्रीकृष्णदास
लक्ष्मीवेंकटेश्वर स्टीम प्रेस,
व बुक डिपो,
अहिल्याबाई चौक, कल्याण
(जि. ठाणे - महाराष्ट्र)

४) खेमराज श्रीकृष्णदास,
चौक - वाराणसी (उ.प्र.)

